The Department of Public Instruction, Bombay.

# PANCHATANTRA I.

EDITED, WITH NOTES,

BY

F. KIELHORN, Ph. D.

LATE PROFESSOR OF ORIENTAL LANGUAGES, DECCAN COLLEGE.

SIXTH EDITION.

(BEING THE REPRINT OF THE 5TH REVISED EDITION)

2,000 Copies.



Bombay:

GOVERNMENT CENTRAL BOOK DEPÔT.

1896.



*Price Six Annas.*

Bombay Sanskrit Series No. IV.

स चार्थः पुरुषाणां षड्भिरुपायैर्भवति भिक्षया नृपसेवया कृषिकर्मणा विद्योपार्जनया व्यवहारेण च वणिक्कर्मणा वा। सर्वेषामपि तेषां वाणिज्येनातिरस्कृतोऽर्थलाभः स्यात्। उक्तं च यतः।

कृता भिक्षा रेकैर्वितरति नृपो नोचितमहो
कृषिः क्लिष्टावृष्ट्या प्रचुरगहनः सेवनविधिः।
कुसीदाद्दारिद्र्यं परकरगतग्रन्थिशमना-
न्न मन्ये वाणिज्यात्किमपि परमं वर्तनमिह ॥ ११ ॥
उपायानां च सर्वेषामुपायः पण्यसंग्रहः।
धनार्थं शस्यते ह्येकस्तदन्यः संशयात्मकः ॥ १२ ॥

तच्च वाणिज्यं सप्तविधमर्थागमाय स्यात्तद्यथा गान्धिकव्यवहारो निक्षेपप्रवेशो गोष्ठिककर्म परिचितग्राहकागमो मिथ्याक्रयकथनं कूटतुलामानं देशान्तराद्भाण्डानयनं चेति। उक्तं च।

पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः।
यत्रैकेन च यत्क्रीतं तच्छतेन प्रदीयते ॥ १३ ॥
निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम्।
निक्षेपी म्रियते तुभ्यं प्रदास्याम्युपयाचितम् ॥ १४ ॥
गोष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः।
वसुधा वसुसंपूर्णा मयाद्य लब्धा किमन्येन ॥ १५ ॥
परिचितमागच्छन्तं ग्राहकमुत्कण्ठया विलोक्यासौ।
हृष्यति तद्धनलुब्धो यद्वत्पुत्रेण जातेन ॥ १६ ॥

अन्यच्च।

पूर्णापूर्णे माने परिचितजनवञ्चनं तथा नित्यम्।
मिथ्याक्रयस्य कथनं निजधर्मोऽयं किरातानाम् ॥ १७ ॥

अन्यच्च।

द्विगुणं त्रिगुणं वापि भाण्डक्रयविधानतः।
प्राप्नुवन्त्युद्यमाल्लोका दूरदेशान्तरं गताः ॥ १८ ॥

इत्येव संप्रधार्य मथुरागामीनि भाण्डान्यादाय शुभायां तिथौ गुरु-

अथातः प्रारभ्यते मित्रभेदं नाम प्रथमं तन्त्रं यस्यायमादिमः श्लोकः ।

वर्धमानो महान्स्नेहः सिंहगोवृषयोर्वने ।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

तद्यथानुश्रूयते । अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र धर्मोपार्जितभूरिविभवो वर्धमानको नाम वणिक्पुत्रो बभूव । तस्य कदाचिच्चिन्ता समुत्पन्ना यत्प्रभूतेऽपि वित्ते सत्यर्थोत्पत्युपायाश्चिन्तनीयाः कर्तव्याश्चेति । यत उक्तं च ।

न हि तद्विद्यते किंचिद्यदर्थेन न सिध्यति ।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ३ ॥
न सा विद्या न तद्दानं न तच्छिल्पं न सा कला ।
अर्थार्थिभिर्न तत्स्थैर्यं धनिनां यन्न गीयते ॥ ४ ॥
इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ॥ ५ ॥
अर्थेभ्योऽपि हि वृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ।
प्रवर्तन्ते क्रियाः सर्वाः पर्वतेभ्य इवापगाः ॥ ६ ॥
पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ ७ ॥
अशनादिन्द्रियाणीव स्युः कार्याण्यखिलान्यपि ।
एतस्मात्कारणाद्वित्तं सर्वसाधनमुच्यते ॥ ८ ॥
अर्थार्थी जीवलोकोऽयं स्मशानमपि सेवते ।
त्यक्त्वा जनयितारं स्वं निःस्वं गच्छति दूरतः ॥ ९ ॥
गतवयसामपि पुंसां येषामर्था भवन्ति ते तरुणाः ।
अर्थेन तु ये हीना वृद्धास्ते यौवनेऽपि स्युः ॥ १० ॥

मन्वादीन्यर्थशास्त्राणि चाणक्यादीनि कामशास्त्राणि वात्स्यायनादीनि। एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते। ततः प्रतिबोधनं भवति। तन्मध्यतोऽथापरः सुमतिनामा प्राह। अशाश्वतोऽयं जीवितव्यविषयः। प्रभूतकालज्ञेयानि शब्दशास्त्राणि। तत्संक्षेपमात्रं शास्त्रं किंचिदेतेषां प्रबोधनार्थं चिन्त्यतामिति। उक्तं च यतः।

अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥ ५ ॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारंगमश्छात्रसंसदि लब्धकीर्तिः। तस्मै समर्पयत्वेतान्। स नूनं द्राक्प्रबुद्धान्करिष्यतीति। स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच। भो भगवन्मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग्यथानन्यसदृशान्विदधासि तथा कुरु। तदहं त्वां शासनशतेन योजयिष्यामि। अथ विष्णुशर्मा तं राजानमूचे। देव श्रूयतां मे तथ्यवचनम्। नाहं विद्याविक्रयं शासनशतेनापि करोमि। पुनरेतांस्तव पुत्रान्मासषट्केन यदि नीतिशास्त्रज्ञान्न करोमि ततः स्वनामत्यागं करोमि। अथासौ राजा तां ब्राह्मणस्यासंभाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितस्तस्मै सादरं तान्कुमारान्समर्प्य परां निर्वृतिमाजगाम। विष्णुशर्मणापि तानादाय तदर्थं मित्रभेदमित्रप्राप्तिकाकोलूकीयलब्धप्रणाशापरीक्षितकारकाणि चेति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः। तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः। ततः प्रभृत्येतत्पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले संप्रवृत्तम्। किं बहुना।

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।
न पराभवमाप्नोति शक्रादपि कदाचन ॥ ६ ॥

॥ कथामुखमेतत् ॥

ओं नमः श्रीशारदागणपतिगुरुभ्यो नमः ॥ नमो मनुबृहस्पतिव्यासवाल्मीकिप्रभृतिभ्यो नमः ॥ महाकविभ्यो नमः ॥

सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम् ।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥ १ ॥

तद्यथानुश्रूयते । अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र सकलार्थिसार्थकल्पद्रुमः प्रवरनृपमुकुटमणिमरीचिमञ्जरीचयचर्चितचरणयुगलः सकलकलापारंगतोऽमरशक्तिर्नाम राजा बभूव । तस्य त्रयः पुत्राः परमदुर्मेधसो वसुशक्तिरुग्रशक्तिरनेकशक्तिश्चेतिनामानो बभूवुः । अथ राजा ताञ्शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच । भो ज्ञातमेतद्भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च । तदेतान्पश्यतो मे महदपि राज्यं न सौख्यमावहति । अथवा साध्विदमुच्यते ।

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥ २ ॥

वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं
वरं जातप्रेतो वरमपि च कन्यैव जनिता ।
वरं वन्ध्या भार्या वरमपि च गर्भेषु वसति-
र्नचाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः ॥ ३ ॥

किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न भक्तिमान् ॥ ४ ॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम् । अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति । ततो यथा मम मनोरथाः सिद्धिं यान्ति तथानुष्ठीयतामिति । तत्रैकः प्रोवाच । देव द्वादशभिर्वर्षैर्व्याकरणं श्रूयते । ततो धर्मशास्त्राणि

जनाभ्यनुज्ञातः सुरथाधिरूढः प्रस्थितः । तस्य च मङ्गलवृषभौ संजीवकनन्दकनामानौ गृहोत्पन्नौ धूर्वोढारौ स्थितौ । तयोरेकः संजीवकाभिधानो यमुनाकच्छमवतीर्णः सम्पङ्कपूरमासाद्य कलितचरणो युगभङ्गं विधाय निषसाद । अथ तं तदवस्थमालोक्य वर्धमानः परं विषादमगमत् । तदर्थं च स्नेहार्द्रहृदयस्त्रिरात्रं प्रयाणभङ्गमकरोत् । अथ तं विषण्णमालोक्य सार्थिकैरभिहितम् । भोः श्रेष्ठिन्किमेवं वृषभस्य कृते सिंहव्याघ्रसमाकुलेऽस्मिन्वने बह्वपाये समग्रोऽपि स्वसार्थस्त्वया संदेहे नियोजितः । उक्तं च ।

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः ।
एतदेव हि पाण्डित्यं यत्स्वल्पाद्भूरिरक्षणम् ॥ १९ ॥

अथासौ तदवधार्य संजीवकस्य रक्षापुरुषान्निरूप्य शेषसार्थं नीत्वा प्रस्थितः । अथ रक्षापुरुषा अपि बह्वपायं तद्वनं विदित्वा संजीवकं परित्यज्य पृष्ठतो गत्वान्येद्युस्तं सार्थवाहं मिथ्याहुः । स्वामिन्मृतोऽसौ संजीवकोऽस्माभिस्तु सार्थवाहस्याभीष्ट इति मत्वा वह्निना संस्कृत इति । तच्छ्रुत्वा सार्थवाहः कृतज्ञः स्नेहार्द्रहृदयस्तस्यौर्ध्वदेहिकक्रिया वृषोत्सर्गादिकाः सर्वाश्चकार । संजीवकोऽप्यायुःशेषतया यमुनासलिलमिश्रैः शिशिरतरवातैराप्यायितशरीरः कथंचिदप्युत्थाय यमुनातटमुपपेदे । तत्र मरकतसदृशानि बालतृणाग्राणि भक्षमाणः कतिपयैरहोभिर्हरवृषभ इव पीनः ककुद्मान्बलवांश्च संवृत्तः प्रत्यहं वल्मीकशिखराग्राणि शृङ्गाभ्यां विदारयन्प्रगर्जंश्चास्ते । साधु चेदमुच्यते ।

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे विनश्यति ॥ २० ॥

अथ कदाचित्पिङ्गलको नाम सिंहः सर्वमृगपरिवृतः पिपासाकुल उदकग्रहणार्थं यमुनातटमवतीर्णः संजीवकस्य गम्भीरतरं शब्दं

दूरादेवाशृणोत् । तं च श्रुत्वातीव व्याकुलहृदयः ससाध्वसमाकारं प्राच्छाद्य वटवृक्षतले चतुर्मण्डलावस्थानेनावस्थितः । चतुर्मण्डलावस्थानं त्विदम् । सिंहः सिंहानुयायिनः काकरवाः किंवृत्ता इति । अथ तस्य करटकदमनकनामानौ द्वौ शृगालौ मन्त्रिपुत्रौ भ्रष्टाधिकारौ सदानुयायिनावास्ताम् । तौ च परस्परं मन्त्रयतः । तत्र दमनकोऽब्रवीत् । भद्र करटक अयं तावदस्मत्स्वामी पिङ्गलक उदकग्रहणार्थं यमुनाकच्छमवतीर्य स्थितः । स किं निमित्तं पिपासाकुलोऽपि निवृत्य व्यूहरचनां कृत्वा दौर्मनस्येनाभिभूतोऽत्र वटतले स्थितः । करटक आह । किमावयोरनेन व्यापारेण ।

अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति ।
स एव निधनं याति कीलोत्पाटीव वानरः ॥ २१ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा १.

अस्ति कस्मिंश्चिन्नगराभ्यासे केनापि वणिक्पुत्रेण तरुषण्डमध्ये देवतायतनं कर्तुमारब्धम् । तत्र ये च कर्मकराः स्थपत्यादयस्ते मध्याह्नवेलायामाहारार्थं नगरमध्ये व्रजन्ति । अथ कदाचित्तत्रानुषङ्गिकं वानरयूथमितश्चेतश्च परिभ्रमदागतम् । तत्रैकस्य कस्यचिच्छिल्पिनोऽर्धस्फाटितोऽञ्जनवृक्षदारुमयः स्तम्भः खदिरकीलकेन मध्यनिहितेन तिष्ठति । अत्रान्तरे वानरास्तरुशिखरप्रासादशृङ्गदारुपर्यन्तेषु यथेच्छया क्रीडितुमारब्धाः । एकश्च तेषां प्रत्यासन्नमृत्युश्चापल्यात्तस्मिन्नर्धस्फाटितस्तम्भ उपविश्य पाणिभ्यां कीलकं संगृह्य यावदुत्पाटयितुमारेभे तावत्तस्य स्तम्भमध्यगतवृषणस्य स्वस्थानाच्चलितकीलकेन यद्वृत्तं तत्प्रागेव निवेदितम् ॥

अतोऽहं ब्रवीमि । अव्यापारेष्विति । आवयोर्भक्षितशेष आहारोऽस्त्येव तत्किममुना व्यापारेण । दमनक आह । तत्किं भवानाहारार्थी केवलमेव । तन्न युक्तम् । उक्तं च ।

सुहृदामुपकारकारणाद्द्विषतां चाप्यपकारकारणात् ।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम् ॥ २२ ॥

किंच ।

यस्मिञ्जीवति जीवन्ति बहवः सोऽत्र जीवति ।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ॥ २३ ॥

यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानशौर्यविभवार्यगुणैः समेतम् ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिरं च बलिं च भुङ्क्ते ॥ २४ ॥

सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ २५ ॥

किंच ।

किं तेन जातु जातेन मातुर्यौवनहारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ २६ ॥

तथा च ।

परिवर्तिनि संसारे मृतः को वा न जायते ।
जातस्तु गण्यते सोऽत्र यः स्फुरत्यन्वयाधिकम् ॥ २७ ॥

किंच ।

जातस्य नदीतीरे तस्यापि तृणस्य जन्मसाफल्यम् ।
यत्सलिलमज्जनाकुलजनहस्तालम्बनं भवति ॥ २८ ॥

तथा च ।

स्तिमितोन्नतसंचारा जनसंतापहारिणः ।
जायन्ते विरला लोके जलदा इव सज्जनाः ॥ २९ ॥

निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः ।
यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ३० ॥

अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥ ३१ ॥

करटक आह । आवां तावदप्रधानौ तत्किमावयोरनेन व्यापारेण ।

उक्तं च ।

अपृष्टोऽत्राप्रधानो यो ब्रूते राज्ञः पुरः कुधीः ।
न केवलमसंमानं लभते च तिरस्क्रियाम् ॥ ३२ ॥

तथा च ।

वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् ।
स्थायीभवति चात्यन्तं रागः शुक्लपटे यथा ॥ ३३ ॥

दमनक आह । मा मैवं वद ।

अप्रधानः प्रधानः स्यात्सेवते यदि पार्थिवम् ।
प्रधानोऽप्यप्रधानः स्याद्यदि सेवाविवर्जितः ॥ ३४ ॥

यत उक्तं च ।

आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसंस्कृतं वा ।
प्रायेण भूमिपतयः प्रमदा लताश्च
यत्पार्श्वतो भवति तत्परिवेष्टयन्ति ॥ ३५ ॥

तथा च ।

कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः ।
आरोहन्ति शनैः पश्चाद्धुन्वन्तमपि पार्थिवम् ॥ ३६ ॥
विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम् ।
सेवावृत्तिविदां चैव नाश्रयः पार्थिवं विना ॥ ३७ ॥
ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च ।
तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ ३८ ॥
ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः ।
प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ ३९
सर्पान्व्याघ्रान्गजान्सिंहान्दृष्ट्वोपायैर्वशीकृतान् ।
राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ ४० ॥
राजानमेव संश्रित्य विद्वान्याति परां गतिम् ।
विना मलयमन्यत्र चन्दनं न प्ररोहति ॥ ४१ ॥

धवलान्यातपत्राणि वाजिनश्च मनोरमाः ।
सदा मत्ताश्च नागेन्द्राः प्रसन्ने सति भूपतौ ॥ ४२ ॥

करटक आह । अथ भवान्किं कर्तुमनाः । सोऽब्रवीत् । अद्यास्मत्स्वामी पिङ्गलको भीतो भीतपरिवारश्च वर्तते । तदेनं गत्वा भयकारणं विज्ञाय संधिविग्रहयानासनसंश्रयद्वैधीभावानामेकतमेन संविधास्ये । करटक आह । कथं वेत्ति भवान्यद्भयाविष्टोऽयं स्वामी । सोऽब्रवीत् । किमत्र ज्ञेयम् । यत उक्तं च ।

उदीरितोऽर्थः पशुनापि गृह्यते
　हयाश्च नागाश्च वहन्ति चोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः
　परेङ्गितज्ञानफला हि बुद्धयः ॥ ४३ ॥

तथा च मनुः ।

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥ ४४ ॥

तदद्यैनं भयाकुलं प्राप्य स्वबुद्धिप्रभावेण निर्भयं कृत्वा वशीकृत्य च निजां साचिव्यपदवीं समासादयिष्यामि । करटक आह । अनभिज्ञो भवान्सेवाधर्मस्य तत्कथमेनं वशीकरिष्यसि । दमनक आह । यथैव नु पाण्डवानां विराटनगरप्रवेशकाले धौम्यमहर्षिकथितः सकलोऽप्यनुजीविधर्मो विज्ञात इति ।

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति त्रयो जनाः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ४५ ॥
सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः ।
आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा ॥ ४६ ॥
यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः ।
न हि तस्मात्फलं तस्य सुकृष्टादूषरादिव ॥ ४७ ॥
द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः ।
भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ ४८ ॥

अपि स्थाणुवदासीनः शुष्यन्परिगतः क्षुधा ।
न त्वेवानात्मसंपन्नाद्वृत्तिमीहेत पण्डितः ॥ ४९ ॥
सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम् ।
आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ ५० ॥
यमाश्रित्य न विश्रामं क्षुधार्ता यान्ति सेवकाः ।
सोऽर्कवन्नृपतिस्त्याज्यः सदापुष्पफलोऽपि सन् ॥ ५१ ॥
राजमातरि देव्यां च कुमारे मुख्यमन्त्रिणि ।
पुरोहिते प्रतीहारे वर्तितव्यं नृपे यथा ॥ ५२ ॥
जीवेति प्रब्रुवन्प्रोक्तः कृत्यं कृत्यविचक्षणः ।
करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ ५३ ॥
प्रभुप्रसादजं वित्तं सुपात्रे यो नियोजयेत् ।
वस्त्राद्यं विदधात्यङ्गे स भवेद्राजवल्लभः ॥ ५४ ॥
अन्तःपुरचरैः सार्धं यो मन्त्रं न समाचरेत् ।
न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ ५५ ॥
संमतोऽहं प्रभोर्नित्यमिति मत्वा व्यतिक्रमेत् ।
कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभः ॥ ५६ ॥
द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् ।
यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ ५७ ॥
द्यूतं यो यमदूताभं हालां हालाहलोपमाम् ।
पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ ५८ ॥
युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे ।
प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ५९ ॥

करटक आह । अथ भवांस्तत्र गत्वा किं तावद्वक्ष्यति । तत्ता-वदुच्यताम् । दमनक आह ।

उत्तरादुत्तरं वाक्यं वदतां संप्रजायते ।
सुवृष्टिगुणसंपन्नाद्बीजाद्बीजमिवापरम् ॥ ६० ॥
अपायसंदर्शनजां विपत्तिमुपायसंदर्शनजां च सिद्धिम् ।
मेधाविनो नीतिगुणप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति ॥६१॥

एकेषां वाचि शुकवदन्येषां हृदि मूकवत् ।
हृदि वाचि तथान्येषां वल्गु वल्गन्ति सूक्तयः ॥ ६२ ॥

न चाहमप्राप्तकालं वक्ष्ये । आकर्णितं मया नीतिसारं पितुः पूर्वमुत्सङ्गं हि निषेवता ।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमपमानं च पुष्कलम् ॥ ६३ ॥

करटक आह ।

दुराराध्या हि राजानः पर्वता इव सर्वदा ।
व्यालाकीर्णाः सुविषमाः कठिना दुःखसेविताः ॥ ६४ ॥

तथा च ।

भोगिनः कञ्चुकाविष्टाः कुटिलाः क्रूरचेष्टिताः ।
सुदुष्टा मन्त्रसाध्याश्च राजानः पन्नगा इव ॥ ६५ ॥
दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम् ।
स्वल्पेनाप्यपकारेण ब्राह्मण्यमिव दुष्यति ॥ ६६ ॥
दुराराध्याः श्रियो राज्ञां दुरापा दुष्परिग्रहाः ।
तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्थिताः ॥ ६७ ॥

दमनक आह । सत्यमेतत् । परं किंतु ।

यस्य यस्य हि यो भावस्तस्य तस्य हि तं नरः ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ६८ ॥
भर्तुश्चित्तानुवर्तित्वं सुवृत्तं चानुजीविनाम् ।
राक्षसाश्चापि गृह्यन्ते नित्यं छन्दानुवर्तिभिः ॥ ६९ ॥
सरुषि नृपे स्तुतिवचनं तदभिमते प्रेम तद्द्विषि द्वेषः ।
तद्दानस्य च शंसा अमन्त्रतन्त्रं वशीकरणम् ॥ ७० ॥

करटक आह । यद्येवमभिमतं तर्हि शिवास्ते पन्थानः सन्तु । यथाभिलषितमनुष्ठीयतामिति । दमनकोऽपि करटकं प्रणम्य पिङ्गलकाभिमुखं प्रतस्थे । आगच्छन्तं दमनकमालोक्य पिङ्गलको द्वाःस्थमब्रवीत् । अपसार्यतां वेत्रलता । अयमस्माकं चिरन्तनो मन्त्रिपुत्रः समागतः । तत्प्रवेश्यतां द्वितीयमण्डलवर्ती यथार्थवादी च । अथोप-

दिष्टे दमनकः पिङ्गलकं प्रणम्य प्राप्तानुज्ञ उपविष्टः । स तु तस्य नखकुलिशालंकृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच । अपि शिवं भवतः । कस्माच्चिराद्दृष्टोऽसि । दमनक आह । न किंचिद्देवपादानामस्माभिः प्रयोजनम् । तथापि प्राप्तकालं वक्तव्यं यत उत्तममध्यमाधमैः सर्वैरपि राज्ञां प्रयोजनम् । उक्तं च ।

दन्तस्य निष्कोषणकेन नित्यं
कर्णस्य कण्डूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां
किमङ्ग वाग्घस्तवता नरेण ॥ ७१ ॥

तथा वयं देवपादानामन्वयागता भृत्या आपत्स्वपि पृष्ठगामिनो यद्यपि स्वमधिकारं न लभामहे तथापि देवपादानामेतद्युक्तं न भवति । उक्तं च ।

स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे प्रभवामीति बध्यते ॥ ७२ ॥

यतः ।

अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते ।
धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः ॥ ७३ ॥

उक्तं च ।

असमैः समीयमानः समैश्च परिहीयमाणसत्कारः ।
धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥ ७४ ॥

यच्चाविवेकितया राजा भृत्यानुत्तमपदयोग्यान्हीनाधमस्थाने नियोजयति न ते तत्रैव तिष्ठन्ति स भूपतेर्दोषो न तेषाम् ।

उक्तं च ।

कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते ।
न स विरौति न चापि स शोभते
भवति योजयितुर्वचनीयता ॥ ७५ ॥

यच्च स्वाम्येवं वदति चिराय दृश्यसे तदपि श्रूयताम् ।

सव्यदक्षिणयोर्यत्र विशेषो नोपलभ्यते ।
कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत् ॥ ७६ ॥
काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते ।
न तेषां संनिधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ ७७ ॥
यत्र स्वामी निर्विशेषं समं भृत्येषु वर्तते ।
तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ ७८ ॥
न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना ।
तेषां च व्यवहारोऽयं परस्परनिबन्धनः ॥ ७९ ॥
भृत्यैर्विना स्वयं राजा लोकानुग्रहकार्यपि ।
मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते ॥ ८० ॥
अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः ।
स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८१ ॥
शिरसा विधृता नित्यं तथा स्नेहेन पालिताः ।
केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ८२ ॥
राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु संमानमात्रेण प्राणैरप्युपकुर्वते ॥ ८३ ॥
एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ।
कुलीनाः शौर्यसंयुक्ताः शक्ता भक्ताः क्रमागताः ॥ ८४ ॥
यस्मिन्कृत्यं समावेश्य निर्विशङ्केन चेतसा ।
आस्यते सेवकः स स्यात्कलत्रमिव चापरम् ॥ ८५ ॥
यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् ।
लज्जया वक्ति नो किंचित्तेन राजा सहायवान् ॥ ८६ ॥
योऽनाहूतः समभ्येति द्वारि तिष्ठति सर्वदा ।
पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ८७ ॥
अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरं च यः ।
यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥ ८८ ॥
ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा ।
यो न चिन्तयते पापं स भृत्योऽर्हो महीभुजाम् ॥ ८९ ॥

न क्षुधा पीड्यते यस्तु निद्रया न कदाचन ।
न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ९० ॥
श्रुत्वा सांग्रामिकीं वार्त्तां भविष्यां स्वामिनं प्रति ।
प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ९१ ॥
सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट् ।
नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥ ९२ ॥
सीमा संकोचमायाति वह्नौ चर्म इवाहितम् ।
स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥ ९३ ॥

तथा शृगालोऽयमिति मन्यमानेन ममोपरि स्वामिना यद्यवज्ञा क्रियते तदप्ययुक्तम् । उक्तं च यतः ।

कौशेयं कृमिजं सुवर्णमुपलाद्दूर्वापि गोरोमतः
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् ।
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥ ९४ ॥
मूषिका गृहजातापि हन्तव्या सापकारिणी ।
उपप्रदानैर्मार्जारो हितकृत्प्रार्थ्यते जनैः ॥ ९५ ॥
एरण्डभिण्डार्कनलैः प्रभूतैरपि संचितैः ।
दारुकृत्यं यथा नास्ति तथैवाज्ञैः प्रयोजनम् ॥ ९६ ॥
किं भक्तेनासमर्थेन किं शक्तेनापकारिणा ।
भक्तं शक्तं च मां विद्धि नावज्ञातुं त्वमर्हसि ॥ ९७ ॥

पिङ्गलक आह । भवत्वेवं तावत् । असमर्थः समर्थो वा चिरन्तनस्त्वमस्माकं मन्त्रिपुत्रस्तद्विश्रब्धं ब्रूहि यत्किंचिद्वक्तुमनाः । दमनक आह । देव विज्ञाप्यं किंचिदस्ति । पिङ्गलक आह । तन्निवेदयाभिप्रेतम् । सोऽब्रवीत् ।

अपि स्वल्पतरं कार्यं यद्भवेत्पृथिवीपतेः ।
तन्न वाच्यं सभामध्ये प्रोवाचेदं बृहस्पतिः ॥ ९८ ॥

तदैकान्तिके मद्विज्ञाप्यमवधारयन्तु देवपादाः । यतः ।

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो न भिद्यते ।
तस्मात्सर्वप्रयत्नेन षट्कर्णं वर्जयेत्सुधीः ॥ ९९ ॥

अथ पिङ्गलकाभिप्रायज्ञा व्याघ्रद्वीपिवृकपुरःसराः सर्वेऽपि तद्वचः समाकर्ण्य संसदि तत्क्षणादेव दूरीभूताः । ततश्च दमनक आह । उदकग्रहणार्थं प्रवृत्तस्य स्वामिनः किमिह निवृत्त्यावस्थानम् । पिङ्गलक आह सविलक्षस्मितम् । न किंचिदपि । सोऽब्रवीत् । देव यद्यनाख्येयं तत्तिष्ठतु । उक्तं च ।

दारेषु किंचित्स्वजनेषु किंचि-
द्गोप्यं वयस्येषु सुतेषु किंचित् ।
युक्तं न वा युक्तमिदं विचिन्त्य
वदेद्विपश्चिन्महतोऽनुरोधात् ॥ १०० ॥

तच्छ्रुत्वा पिङ्गलकश्चिन्तयामास । योग्योऽयं दृश्यते । तत्कथयाम्येतस्याग्र आत्मनोऽभिप्रायम् । उक्तं च ।

स्वामिनि गुणान्तरज्ञे गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
मित्रे चानुपचर्ये निवेद्य दुःखं सुखी भवति ॥ १०१ ॥

भो दमनक शृणोषि शब्दं दूरान्महान्तम् । सोऽब्रवीत् । स्वामिन् शृणोमि । तत्किम् । पिङ्गलक आह । भद्र अहमस्माद्वनाद्गन्तुमिच्छामि । दमनक आह । कस्मात् । पिङ्गलक आह । यतोऽद्यास्मद्वने किमप्यपूर्वं सत्त्वं प्रविष्टं यस्यायं महाशब्दः श्रूयते । तस्य च शब्दानुरूपेण पराक्रमेण भवितव्यमिति । दमनक आह । यत्स्वामी शब्दमात्रादपि भयमुपगतस्तदप्ययुक्तम् । उक्तं च ।

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः ।
पैशुन्याद्भिद्यते स्नेहो वाचा भिद्येत कातरः ॥ १०२ ॥

तन्न युक्तं स्वामिनः पूर्वोपार्जितं वनं त्यक्तुम् । यतो भेरीवेणुवीणामृदङ्गपटहशङ्खकाहलादिभेदेन शब्दा अनेकविधा भवन्ति तन्न केवलाच्छब्दमात्रादपि भेतव्यम् । उक्तं च ।

अत्युत्कटे च रौद्रे च शत्रौ यस्य न हीयते ।
धैर्यं प्राप्ते महीनाथे न स याति पराभवम् ॥ १०३ ॥

दर्शितभयेऽपि धातरि धैर्यध्वंसो भवेन्न धीराणाम् ।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः ॥ १०४ ॥

तथा च ।

यस्य न विपदि विषादः संपदि हर्षो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ १०५ ॥

तथा च ।

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ १०६ ॥

अपि च ।

अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति ।
जतुजाभरणस्येव रूपेणापि हि तस्य किम् ॥ १०७ ॥

तदेवं ज्ञात्वा स्वामिना धैर्यावष्टम्भः कार्यः । न शब्दमात्राद्भेतव्यम् । उक्तं च ।

पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा ।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च ॥ १०८ ॥

पिङ्गलक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा २.

कश्चिच्छृगालः क्षुत्क्षामकण्ठ इतस्ततः परिभ्रमन्वने सैन्यद्वयसंग्रामभूमिमपश्यत् । तस्यां च दुन्दुभेः पतितस्य वायुवशाद्वल्लीशाखाग्रैर्हन्यमानस्य शब्दमशृणोत् । अथ क्षुभितहृदयश्चिन्तयामास । अहो विनष्टोऽस्मि । तद्यावन्नास्य प्रोच्चारितशब्दस्य दृष्टिगोचरे गच्छामि तावद्व्रजामि । अथवा नैतद्युज्यते सहसैव पितृपैतामहं वनं त्यक्तुम् । उक्तं च ।

भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् ।
कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥ १०९ ॥

तत्तावज्जानामि कस्यायं शब्दः । धैर्यमालम्ब्य विमर्शयन्यावन्म-

न्दं मन्दं गच्छति तावद्दुन्दुभिमपश्यत् । स च तं परिज्ञाय समीपं गत्वा स्वयमेव कौतुकादताडयत् । भूयश्च हर्षादचिन्तयत् । अहो चिरादेतदस्माकं महद्भोजनमापतितम् । तन्नूनं प्रभूतमांसमेदोऽसृग्भिः परिपूरितं भविष्यति । ततः परुषचर्मावगुण्ठितं तत्कथमपि विदार्यैकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्टः । परं चर्म विदारयतो दंष्ट्राभङ्गः समजनि । अथ निराशीभूतस्तद्दारुशेषमवलोक्य श्लोकमेनमपठत्पूर्वमेव मया ज्ञातमिति ॥

ततो न शब्दमात्राद्भेतव्यम् । पिङ्गलक आह । भोः पश्यायं मम सर्वोऽपि परिग्रहो भयव्याकुलितचित्तः पलायितुमिच्छति । तत्कथमहं धैर्यावष्टम्भं करोमि । सोऽब्रवीत् । स्वामिन्नैतेषामेव दोषो यतः स्वामिसदृशा एव भवन्ति भृत्याः । उक्तं च ।

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥ ११० ॥

तत्पौरुषावष्टम्भं कृत्वा त्वं तावदत्रैव प्रतिपालय यावदहमेतच्छब्दस्वरूपं ज्ञात्वागच्छामि । ततः पश्चाद्यथोचितं कार्यमिति । पिङ्गलक आह । किं तत्र भवान्गन्तुमुत्सहते । स आह । किं स्वाम्यादेशात्सद्भृत्यस्य कृत्याकृत्यमस्ति उक्तं च ।

स्वाम्यादेशात्सुभृत्यस्य न भीः संजायते क्वचित् ।
प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम् ॥ १११ ॥

तथा च ।

स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च ।
मन्यते न स संधार्यो भूभुजा भूतिमिच्छता ॥ ११२ ॥

पिङ्गलक आह । भद्र यद्येवं तद्गच्छ शिवास्ते पन्थानः सन्त्विति । दमनकोऽपि तं प्रणम्य संजीवकशब्दानुसारी प्रतस्थे । अथ दमनके गते भयव्याकुलमनाः पिङ्गलकश्चिन्तयामास । अहो न शोभनं कृतं मया यत्तस्य विश्वासं गत्वात्माभिप्रायो निवेदितः । कदाचिद्दमनकोऽयमुभयवेतनो भूत्वा ममोपरि दुष्टबुद्धिः स्याद्भ्रष्टाधिकारत्वात् । उक्तं च ।

ये भवन्ति महीपस्य संमानितविमानिताः ।
यतन्ते तस्य नाशाय कुलीना अपि सर्वदा ॥ ११३ ॥

तत्तावदस्य चिकीर्षितं वेत्तुमन्यत्स्थानान्तरं गत्वा प्रतिपालयामि। कदाचिद्दमनकस्तमादाय मां व्यापादयितुमिच्छति । उक्तं च ।

न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि ।
विश्वस्तास्त्वेव वध्यन्ते बलिनो दुर्बलैरपि ॥ ११४ ॥
महामतिरपि प्राज्ञो न विश्वासं व्रजेद्द्रिपौ ।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ११५ ॥

एवं संप्रधार्य स्थानान्तरं गत्वा दमनकमवलोकयन्नेकाकी तस्थौ । दमनकोऽपि संजीवकसकाशं गत्वा वृषभोऽयमिति परिज्ञाय हृष्टमना व्यचिन्तयत् । अहो शोभनमापतितम् । अनेनैतस्य संधिविग्रहद्वारेण मम पिङ्गलको वश्यो भविष्यतीति उक्तं च ।

न कौलीन्यान्न सौहार्दान्नृपो वाक्ये प्रवर्तते ।
मन्त्रिणां यावदाप्तं न व्यसनं शोक एव च ॥ ११६ ॥
सदैवापद्गतो राजा भोग्यो भवति मन्त्रिणाम् ।
अत एव हि वाञ्छन्ति मन्त्रिणः सापदं नृपम् ॥ ११७ ॥
यथा नेच्छति नीरोगः कदाचित्सुचिकित्सकम् ।
तथापद्रहितो राजा सचिवं नाभिवाञ्छति ॥ ११८ ॥

एवं विचिन्तयन्पिङ्गलकाभिमुखः प्रतस्थे । पिङ्गलकोऽपि तमायान्तमुत्प्रेक्ष्य स्वाकारं गूहमानो यथापूर्वमवस्थितः । दमनकोऽपि पिङ्गलकसकाशं गत्वा प्रणम्योपविष्टः । पिङ्गलक आह । किं दृष्टं भवता तत्सत्त्वम् । दमनक आह । दृष्टं स्वामिप्रसादात् । पिङ्गलकोऽप्याह । सत्यं दृष्टं भविष्यति । दमनक आह । किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते । उक्तं च ।

अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् ।
देवानां च विनश्येत स द्रुतं सुमहानपि ॥ ११९ ॥

तथा च ।

सर्वदेवमयो राजा मनुना संप्रकीर्तितः ।
तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ १२० ॥
सर्वदेवमयस्यापि विशेषो भूपतेरयम् ।
शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ १२१ ॥

पिङ्गलक आह । सत्यं दृष्टं भविष्यति भवता । न दीनोपरि महान्तः कुप्यन्तीति न त्वं तेन निपातितः । यतः ।

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
स्वभाव एवोन्नतचेतसामयं
महान्महत्स्वेव करोति विक्रमम् ॥ १२२ ॥

अपि च ।

गल्लस्थलेषु मदवारिषु बद्धराग-
मत्तभ्रमद्भ्रमरपादतलाहतोऽपि ।
कोपं न गच्छति नितान्तबलोऽपि नाग-
स्तुल्ये बले तु बलवान्परिकोपमेति ॥ १२३ ॥

दमनक आह । अस्त्येवं महात्मा स वयं कृपणाः । तथापि स्वामी यदि कथयति ततो भृत्यत्वे नियोजयामि । पिङ्गलक आह सोच्छ्वासम् । किं भवाञ्शक्नोत्येवं कर्तुम् । दमनक आह । किमसाध्यं बुद्धेरस्ति । उक्तं च ।

न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः ।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ १२४ ॥

पिङ्गलक आह । यद्येवं तर्ह्यमात्यपद आरोपितस्त्वम् । अद्यप्रभृति प्रसादनिग्रहादिकं त्वयैव कार्यमिति निश्चयः । अथ दमनकः सत्वरं गत्वा साक्षेपं तमिदमाह । एह्येहि दुष्ट वृषभ । स्वामी पिङ्गलकस्त्वामाकारयति । किं निःशङ्को भूत्वा मुहुर्मुहुर्नदसि वृथेति । तच्छ्रुत्वा संजीवकोऽब्रवीत् । भद्र कोऽयं पिङ्गलकः । दमनक आह । किं स्वामिनं पिङ्गलकमपि न जानासि । तत्क्षणं प्रतिपालय । फलेन ज्ञास्यसि । नन्वयं सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा

सिंहस्तिष्ठति । तच्छ्रुत्वा गतासुमात्मानं मन्यमानः संजीवकः परं विषादमगमत् । आह च । भद्र भवान्साधुसमाचारो वचनपटुश्च दृश्यते । तद्यदि मामवश्यं तत्र नयसि तदभयदानेनात्मीयस्वामिसकाशात्प्रसादः कारयितव्यः । दमनक आह । भोः सत्यमभिहितं भवता । नीतिरेषा । यतः ।

लभ्यते भूमिपर्यन्तः समुद्रस्य गिरेरपि ।
न कथंचिन्महीपस्य चित्तान्तः केनचित्क्वचित् ॥ १२५ ॥

तत्त्वमत्रैव तिष्ठ यावदहं तं समये दृष्ट्वा ततः पश्चात्त्वामानयामीति । तथानुष्ठिते दमनकः पिङ्गलकसकाशं गत्वेदमाह । स्वामिन्न तत्प्राकृतं सत्त्वं भगवतो महेशस्य वाहनभूतो वृषभ इति । मया पृष्ट इदमूचे । श्रीमहेशेन परितुष्टेन कालिन्दीपरिसरे शष्पाग्राणि चरितुं समादिष्टः । किं बहुना । मम प्रदत्तं क्रीडार्थं वनमिदम् । पिङ्गलक आह सभयम् । ज्ञातं मयाधुना न देवताप्रसादं विना शष्पभोजिनो व्यालाकीर्णे वन एवं निःशङ्का नदन्तो भ्रमन्ति । ततस्त्वया किमभिहितम् । दमनक आह । स्वामिन् एतदभिहितं यदेतद्वनं चण्डिकावाहनभूतस्य पिङ्गलकस्य विषयीभूतम् । तद्भवानभ्यागतः प्रियोऽतिथिः । तत्तस्य सकाशं गत्वा भ्रातृस्नेहेनैकत्र भक्षणपानविहरणक्रियाभिरेकस्थानाश्रयेण कालो नेयः । तेनापि सर्वमेतत्प्रतिपन्नमुक्तं च सहर्षं स्वामिनः सकाशादभयदक्षिणा दापयितव्येति । तदत्र स्वामी प्रमाणम् । तच्छ्रुत्वा पिङ्गलक आह । साधु सुमते साधु मन्त्रिश्रोत्रिय साधु । मम हृदयेन सह संमन्त्र्य भवतेदमभिहितम् । तद्दत्ता मया तस्याभयदक्षिणा । परं सोऽपि मदर्थेऽभयदक्षिणां याचयित्वा द्रुततरमानीयतामिति । अथ साधु चेदमुच्यते ।

अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः ।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ १२६ ॥

तथा च ।

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ १२७ ॥

दमनकोऽपि तं प्रणम्य संजीवकसकाशं प्रस्थितः सहर्षमचिन्तयद्यदात्मप्रसादसंमुखो नः स्वामी वचनवशगश्च संवृत्तस्तन्नास्ति धन्यतरो मम । उक्तं च ।

अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् ।
अमृतं राजसंमानममृतं क्षीरभोजनम् ॥ १२८ ॥

अथ संजीवकसकाशमासाद्य सप्रश्रयमुवाच । भो मित्र प्रार्थितोऽसौ मया भवदर्थे स्वाम्यभयप्रदानम् । तद्विश्रब्धं गम्यतामिति । परं त्वया राजप्रसादमासाद्य मया सह समयधर्मेण वर्तितव्यम् । न गर्वमासाद्य स्वप्रभुतया विचरणीयम् । अहमपि तव संकेतेन सर्वां राज्यधुरममात्यपदवीमाश्रित्योद्धरिष्यामि । एवं कृते द्वयोरप्यावयो राज्यलक्ष्मीर्भोग्या भविष्यति । यतः ।

आखेटकस्य धर्मेण विभवाः स्युर्वशे नृणाम् ।
नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव ॥ १२९ ॥

तथा च ।

यो न पूजयते गर्वादुत्तमाधममध्यमान् ।
नृपासन्नान्स मान्योऽपि भ्रश्यते दन्तिलो यथा ॥ १३० ॥

संजीवक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा ३.

अस्त्यत्र धरातले वर्धमानं नाम नगरम् । तत्र दन्तिलो नाम नानाभाण्डपतिः सकलपुरनायकः प्रतिवसति स्म । तेन पुरकार्यं नृपकार्यं च कुर्वता तुष्टिं नीतास्तत्पुरवासिनो लोका नृपतिश्च । किं बहुना । न कोऽपि तादृक्चतुरो दृष्टो नापि श्रुतो वेति । अथवा सत्यमेतदुक्तम् ।

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ १३१ ॥

अथैवं गच्छति काले दन्तिलस्य कदाचिद्विवाहः संप्रवृत्तः। तत्र तेन सर्वे तत्पुरवासिनो राजसंनिधिलोकाश्च संमानपुरःसरमामन्त्र्य वस्त्रादिभिः सत्कृताः। ततो विवाहानन्तरं राजा सान्तःपुरः स्वगृहमानीयाभ्यर्चितः। अथ तस्य नृपतेर्गृहसंमार्जनकर्ता गोरम्भो नाम राजसेवको गृहायातोऽपि तेनानुचितस्थान उपविष्टो विज्ञायार्धचन्द्रं दत्त्वा निःसारितः। सोऽपि ततः प्रभृति निःश्वसन्नपमानान्न रात्रिमपि शेते। कथं मया तस्य भाण्डपते राजप्रसादहानिः कर्तव्येति चिन्तयन्नास्ते। किमनेन वृथा शरीरशोषेण। न किंचिन्मया तस्यापकर्तुं शक्यमिति। अथवा साध्विदमुच्यते।

यो ह्यपकर्तुमशक्तः कुप्यति किमसौ नरोऽत्र निर्लज्जः।
उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ॥ १३२ ॥

अथ कदाचित्प्रत्यूषे योगनिद्रां गतस्य राज्ञः शय्यान्ते मार्जनं कुर्वन्निदमाह। अहो दन्तिलस्य महद्धृष्टत्वं यद्राजमहिषीमालिङ्गति। तच्छ्रुत्वा राजा ससंभ्रममुत्थाय तमुवाच। भो गोरम्भ सत्यमेतद्यद्देवी दन्तिलेनालिङ्गितेति। गोरम्भः प्राह। देव रात्रिजागरेण द्यूतासक्तस्य मे बलान्निद्रा समायाता। तन्न वेद्मि किं मयाभिहितम्। राजा सेर्ष्यं स्वगतम्। एष तावदस्मद्गृहेऽप्रतिहतगतिस्तथा दन्तिलोऽपि। तत्कदाचिदनेन देवी समालिङ्ग्यमाना दृष्टा भविष्यति। तेनेदमभिहितम्। उक्तं च।

यद्वाञ्छति दिवा मर्त्यो वीक्षते वा करोति वा।
तत्स्वप्नेऽपि तदभ्यासाद्ब्रूते वाथ करोति वा ॥ १३३ ॥

तथा च।

शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम्।
सुगूढमपि तज्ज्ञेयं स्वप्नवाक्यात्तथा मदात् ॥ १३४ ॥

अथवा स्त्रीणां विषये कोऽत्र संदेहः।

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ १३५ ॥

एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षरं
वीक्षन्तेऽन्यमितःस्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः ।
दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया
केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ॥ १३६ ॥

तथा च ।

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ १३७ ॥
रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ १३८ ॥
यो मोहान्मन्यते मूढो रक्तेयं मम कामिनी ।
स तस्या वशगो नित्यं भवेत्क्रीडाशकुन्तवत् ॥ १३९ ॥
तासां वाक्यानि कृत्यानि स्वल्पानि सुगुरूण्यपि ।
करोति यः कृतैर्लोके लघुत्वं याति सर्वतः ॥ १४० ॥
स्त्रियं च यः प्रार्थयते संनिकर्षं च गच्छति ।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ॥ १४१ ॥
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति सर्वदा ॥ १४२ ॥
नासां कश्चिदगम्योऽस्ति नासां च वयसि स्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १४३ ॥
रक्तोऽभिजायते भोग्यो नारीणां शाटको यथा ।
घृष्यते यो दशालम्बी नितम्बे विनिवेशितः ॥ १४४ ॥
अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा ।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ १४५ ॥

एवं स राजा बहुविधं विलप्य तत्प्रभृति दन्तिलस्य प्रसादपराङ्मुखः संजातः । किं बहुना । तस्य राजद्वारे प्रवेशो निवारितः । अथ दन्तिलः प्रसादपराङ्मुखं राजानमवलोक्य चिन्तयामास ।

कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तंगताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।

कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥१४६॥

काके शौचं द्यूतकारे च सत्यं
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता
राजा मित्रं केन दृष्टं श्रुतं वा ॥ १४७ ॥

अपरं मयास्य भूपतेरथवान्यस्यापि राजसंबन्धिनः स्वप्नेऽपि नानिष्टं कृतम् । तत्किमेतत् । एवं तं दन्तिलं राजद्वारे विष्कम्भितं विलोक्य संमार्जनकर्ता गोरम्भो विहस्य द्वारपालानिदमूचे । भो भो द्वारपालाः राजप्रसादाधिष्ठितोऽयं दन्तिलः स्वयं निग्रहानुग्रहकर्ता च । तदनेन निवारितेन यथाहं तथा यूयमप्यर्धचन्द्रभाजिनो भविष्यथ । तच्छ्रुत्वा दन्तिलश्चिन्तयामास । नूनमिदमेतस्य गोरम्भस्य चेष्टितम् । अथवा साध्विदमुच्यते ।

अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते ।
अपि संमानहीनोऽपि स सर्वत्रापि पूज्यते ॥ १४८ ॥
अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः ।
यदाप्नोति फलं लोकात्तस्यांशमपि नो गुणी ॥ १४९ ॥

एवं स बहुविधं विलप्य विलक्षानन उद्वेगाद्गतप्रभावः स्वगृहं गत्वा निशामुखे गोरम्भमाहूय वस्त्रयुगलेन संमान्येदमुवाच । भद्र मया तदा त्वमनुचितस्थाने राजासन उपविष्टो भर्त्सयित्वापमानितो न रागात्त्वं निःसारितः । सोऽपि स्वर्गराज्योपमं तद्वस्त्रयुगलमासाद्य परं परितोषं गत्वा तमुवाच । भोः श्रेष्ठिन्क्षान्तं मया ते तत् । अस्य कृतसंमानस्य पश्य मे बुद्धिप्रभावं राजप्रसादं च । एवमुक्त्वा सपरितोषं निष्क्रान्तः । साधु चेदमुच्यते ।

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी चेष्टा तुलायष्टेः खलस्य च ॥ १५० ॥

अथ गोरम्भस्तत्रैव गत्वा योगनिद्रां गतस्य राज्ञः संमार्जनक्रियां कुर्वन्निदमाह । अहो अविवेकोऽस्मद्भूपतेर्यत्पुरीषोत्सर्गं कुर्वंश्चिर्भटी-

भक्षणं करोति । तच्छ्रुत्वा राजा सविस्मयं तमुवाच । रे रे गोरम्भ किमप्रस्तुतं लपसि । गृहकर्मकरत्वात्त्वां न व्यापादयामि । किं त्वया कदाप्यहमेवंविधं कर्म समाचरन्दृष्टः । सोऽब्रवीत् । देव द्यूतासक्त्या रात्रिजागरणेन संमार्जनं कुर्वाणस्य मम बलान्निद्रा समायाता । तयाविष्टेन किंचिज्जल्पितम् । तन्न वेद्मि । तत्प्रसादं करोतु स्वामी मे परवशस्येति । एवं राजा श्रुत्वा चिन्तितवान्यन्मयाजन्म पुरीषोत्सर्गं कुर्वता कदापि चिर्भटिका न भक्षिता । तद्यथायं व्यतिकरोऽसंभाव्यो ममानेन व्याहृतस्तथा दन्तिलस्यापीति निश्चयः । तन्मया न युक्तं कृतं यत्स वराकोऽपमानितः । न तादृक्पुरुषाणामेवंविधं चेष्टितं संभाव्यते । तस्याप्रसादेन राजकृत्यानि सर्वाण्यपि शिथिलतां व्रजन्ति । एवमनेकधा विमृश्य दन्तिलमाहूय निजाङ्गवस्त्राभरणादिभिः संयोज्य स्वाधिकारे नियोजयामास ॥

अतोऽहं ब्रवीमि यो न पूजयते गर्वादिति ।

संजीवक आह भद्र एवमेवैतत् । यद्भवताभिहितं तदेव मया कर्तव्यमिति । एवमभिहिते दमनकस्तमादाय पिङ्गलकसकाशमगमत् । आह च । देव एष मया स संजीवक आनीतः । देवोऽधुना प्रमाणम् । संजीवकोऽपि तं सादरं प्रणम्याग्रतः सविनयं स्थितः । पिङ्गलकोऽपि तस्य पीनायतककुद्मतो नखकुलिशालंकृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच । अपि भवतः शिवम् । कुतस्त्वमस्मिन्वने विजने समायातोऽसि । तेनाप्यात्मवृत्तान्तः कथितः । यथा वर्धमानेन सह वियोगः संजातस्तथा सर्वं निवेदितम् । एतच्छ्रुत्वा पिङ्गलकः सादरतरं तमुवाच । वयस्य न भेतव्यम् । मद्भुजपञ्जरपरिरक्षितेन यथेच्छं त्वयाधुना वर्तितव्यमन्यच्च नित्यं मत्समीपवर्तिना भाव्यं यतः कारणाद्बह्वपायं रौद्रसत्त्वनिषेवितं वनं गुरूणामपि सत्त्वानामसेव्यं कुतः शष्पभोजिनाम् । एवमुक्त्वा सकलमृगपरिवृतो यमुनाकच्छमवतीर्योदकग्रहणं कृत्वा स्वेच्छया तदेव वनं प्रविष्टः । ततश्च करटकदमनकनिक्षिप्तराज्यभारः संजीवकेन सह सुभाषितगोष्ठीमनुभवन्नास्ते । अथवा साध्विदमुच्यते ।

यदृच्छयाप्युपनतं सकृत्सज्जनसंगतम् ।
भवत्यजरमत्यन्तं नाभ्यासक्रममीक्षते ॥ १५१ ॥

संजीवकेनाप्यनेकशास्त्रावगाहनादुत्पन्नबुद्धिप्रागल्भ्येन स्वल्पैरेवाहोभिर्मूढमतिः पिङ्गलको धीमांस्तथा कृतो यथारण्यधर्माद्वियोज्य ग्राम्यधर्मे नियोजितः । शेषः सर्वोऽपि मृगजनो दूरीभूतस्तिष्ठति । करटकदमनकावपि प्रवेशं न लभेते । अन्यच्च सिंहपराक्रमाभावात्सर्वोऽपि मृगजनः क्षुधाविष्टः कांदिशीकः संवृत्तः । उक्तं च ।

फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम् ।
संत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ १५२ ॥

तथा च ।

अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः ।
वृत्तिभङ्गान्महीपालं त्यक्त्वा यान्ति सुसेवकाः ॥ १५३ ॥

अन्यच्च ।

कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः ।
कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ १५४ ॥

तथा न केवलं सेवका एवेत्थं भवन्त्यासंसारं समस्तमेतज्जगदपि तावद्भक्षणार्थं सामादिभिरुपायैस्तिष्ठति । तद्यथा ।

देशानामुपरि क्ष्मापा आतुराणां चिकित्सकाः ।
वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥ १५५ ॥
प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् ।
गणिकाः कामुकानां च सर्वलोकस्य शिल्पिनः ॥ १५६ ॥
सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम् ।
भुञ्जते च यथाशक्ति जलजाञ्जलजा यथा ॥ १५७ ॥

अथवा साध्विदमुच्यते ।

सर्पाणां च खलानां च परद्रव्यापहारिणाम् ।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ १५८ ॥

अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्तः फणी
तं च क्रौञ्चरिपोः शिखी गिरिसुतासिंहोऽपि नागाशनम् ।

इत्थं यत्र परिग्रहस्य घटना शम्भोरपि स्याद्गृहे
तत्रान्यस्य कथं न भावि जगतो यस्मात्स्वरूपं हि तत् ॥१५९॥

ततः क्षुत्क्षामकण्ठौ परस्परं करटकदमनकौ मन्त्रयेते । तत्र दमनको ब्रूते । भद्र आवां तावदप्रधानतां गतौ । एष पिङ्गलकः संजीवकानुरक्तः स्वव्यापारपराङ्मुखः स्थितः । सर्वोऽपि परिजनो गतः । तत्किं क्रियते । करटक आह । यद्यपि त्वदीयवचनं न करोति तथापि स्वामी स्वदोषनाशाय वाच्यः । उक्तं च ।

अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः ।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ १६० ॥

तथा च ।

मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः ।
उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः ॥ १६१ ॥

त्वयैव शष्पभोजी स्वामिनः सकाशमानीतः । तत्स्वहस्तेनाङ्गाराः कर्षिताः । दमनक आह । सत्यमेतत् । ममायं दोषो न स्वामिनः । उक्तं च ।

जम्बुको हुडुयुद्धेन वयं चाषाढभूतिना ।
नापिती परकार्येण त्रयो दोषाः स्वयंकृताः ॥ १६२ ॥

करटक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा ४.

अस्ति कस्मिंश्चिद्विविक्तप्रदेशे मठायतनम् । तत्र देवशर्मा नाम परिव्राजकः प्रतिवसति स्म । तस्यानेकसाधुजनदत्तसूक्ष्मवस्त्रविक्रयवशात्कालेन महती वित्तमात्रा संजाता । ततः स न कस्यचिद्विश्वसिति । नक्तंदिनं कक्षान्तरात्तां मात्रां न मुञ्चति । अथवा साधु चेदमुच्यते ।

अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ १६३ ॥

अथाषाढभूतिर्नाम परवित्तापहारकस्तामर्थमात्रां तस्य कक्षान्तरगतां लक्षयित्वा व्यचिन्तयत्। कथं मयास्येयमर्थमात्रा हर्तव्येति। तदत्र मठे तावद्दृढशिलासंचयवशाद्भित्तिभेदोऽपि नास्त्युच्चैस्तरत्वाच्च द्वारेण प्रवेशो नास्ति तदर्थं मायावचनैर्विश्वास्य च्छात्रतां व्रजामि येन स विश्वस्तः कदाचिद्विश्वासमेति। उक्तं च।

नाविदग्धः प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः।
निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः॥ १६४॥

एवं निश्चित्य तस्यान्तिकमुपगम्यों नमः शिवायेति प्रोच्चार्य साष्टाङ्गं प्रणम्य सप्रश्रयमुवाच। भगवन् असारः संसारोऽयं गिरिनदीवेगोपमं यौवनं तृणाग्निसमं जीवितं शरदभ्रच्छायासदृशा भोगाः स्वप्नसदृशो मित्रपुत्रकलत्रभृत्यवर्गसंयोगः। एवं मया सम्यक्परिज्ञातम्। तत्किं कुर्वतो मे संसारसमुद्रोत्तरणं भविष्यति। तच्छ्रुत्वा स सादरमाह। वत्स धन्योऽसि यत्प्रथमे वयस्येवं विरक्तिभावः। उक्तं च।

पूर्वे वयसि यः शान्तः स शान्त इति मे मतिः।
धातुषु क्षीयमाणेषु शमः कस्य न जायते॥ १६५॥
आदौ चित्ते ततः काये सतां संपद्यते जरा।
असतां तु पुनः काये नैव चित्ते कदाचन॥ १६६॥

यच्च मां संसारसागरोत्तरणोपायं पृच्छसि तच्छ्रूयताम्।

शूद्रो वा यदि वान्योऽपि चण्डालोऽपि जटाधरः।
दीक्षितः शिवमन्त्रेण सभस्माङ्गी शिवो भवेत्॥ १६७॥
षडक्षरेण मन्त्रेण पुष्पमेकमपि स्वयम्।
लिङ्गस्य मूर्ध्नि यो दद्यान्न स भूयोऽभिजायते॥ १६८॥

तच्छ्रुत्वाषाढभूतिः पादौ गृहीत्वा सप्रश्रयमिदमाह। भगवन्दीक्षया मेऽनुग्रहं कुरु। ततो देवशर्माह। वत्स अनुग्रहं ते करिष्यामि परंतु रात्रौ त्वया मठमध्ये न प्रवेष्टव्यं यत्कारणं निःसङ्गता यतीनां युज्यते तव ममापि च। उक्तं च।

दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-
द्विप्रोऽनध्ययनात्कुलं कुतनयात्स्नेहः प्रवासाश्रयात्।

मैत्री चाप्रणयात्समृद्धिरनयाच्छीलं खलोपासना-
त्स्त्री गर्वादनवेक्षणादपि कृषिस्त्यागात्प्रमादाद्धनम् ॥१६९॥

तत्त्वया व्रतग्रहणानन्तरं मठद्वारे तृणकुटीरके शयनीयम् । स चाह । भगवन्भवदादेशः प्रमाणम् । परत्र हि तेन प्रयोजनम् । अथ कृतशयनसमयं देवशर्मानुग्रहं कृत्वा शास्त्रोक्तविधिना शिष्यतामनयत् । सोऽपि हस्तपादावमर्दनादिपरिचर्यया तं परितोषमनयत् । पुनस्तथापि मुनिः कक्षान्तरान्मात्रां न मुञ्चति । अथैवं गच्छति काल आषाढभूतिश्चिन्तयामास । अहो न कथंचिदेष मे विश्वासमेति । तत्किं दिवापि शस्त्रेण मारयामि किंवा विषं प्रयच्छामि किंवा पशुमिव व्यापादयामीति । एवं चिन्तयतस्तस्य देवशर्मणोऽपि शिष्यपुत्रः कश्चित्परिभ्रमन्नामन्त्रणाय समायातः । आह च भगवन्पवित्रारोपणकृते मम गृहमागम्यतामिति । तच्छ्रुत्वा देवशर्माषाढभूतिना सह हृष्टमनाः प्रस्थितः । अथैवं गच्छतोरग्रे काचिन्नदी समायाता । तां दृष्ट्वा मात्रां कक्षान्तरादवतार्य कन्थामध्ये सुगुप्तां निधाय स्नात्वा देवार्चनं विधाय तदनन्तरमाषाढभूतिमिदमाह । भो आषाढभूते यावदहं पुरीषोत्सर्गं विधायागच्छामि तावदेषा कन्था योगेश्वरस्य सावधानेन रक्षणीया । इत्युक्त्वा गतः । आषाढभूतिरपि तस्मिन्नदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः । देवशर्मापि छात्रगुणानुरञ्जितमनाः सुविश्वस्तो यावदुपविष्टस्तिष्ठति तावत्सुवर्णरोमदेहयूथमध्ये हुडुयुद्धमपश्यत् । अथ रोषवशाद्धुडुयुगलस्य दूरमपसरणं कृत्वा भूयोऽपि समुपेत्य ललाटपट्टाभ्यां प्रहरतो भूरि रुधिरं पतति । तच्च जम्बुको जिह्वालौल्याद्रङ्गभूमिं प्रविश्यास्वादयति । देवशर्मापि विलोक्याचिन्तयत् । अहो मन्दमतिरयं जम्बुकः । यदि कथमप्यनयोः संघट्टे पतिष्यति तन्नूनं मृत्युमेष्यतीति तर्कयामि । अत्रान्तरे तथैव रक्तास्वादनलौल्यान्मध्ये प्रविशंस्तयोः शिरःसंपाते पतितो मृतश्च शृगालः । देवशर्मापि तं शोचमानो मात्रामुद्दिश्य शनैः शनैः प्रस्थितो यावदाषाढभूतिं न पश्यति ततश्चौत्सुक्येन शौचं विधाय यावत्कन्थामालोकयति तावन्मात्रां न

पश्यति । ततश्च हा हा मुषितोऽस्मीति जल्पन्पृथिवीतले निपपात । ततः क्षणाच्चेतनां लब्ध्वा भूयोऽपि समुत्थाय फूत्कर्तुमारब्धः । भो आषाढभूते क्व मां वञ्चयित्वा गतोऽसि । तद्देहि मे प्रतिवचनम् । एवं बहु विलप्य तस्य पदपद्धतिमन्वेषयञ्शनैः शनैः प्रस्थितः । एवं स गच्छन्संध्यासमये कंचिद्ग्राममाससाद । अथ तस्माद्ग्रामात्कश्चित्कौलिकः सभार्यो मद्यपानकृते समीपवर्तिनि नगरे प्रस्थितः । देवशर्मापि तमालोक्य प्रोवाच । भो भद्र वयं सूर्योढा अतिथयस्तवान्तिकं प्राप्ताः न कमप्यत्र ग्रामे जानीमः । तद्गृह्यतामतिथिधर्मः । उक्तं च ।

संप्राप्तो योऽतिथिः सायं सूर्योढो गृहमेधिनाम् ।
पूजया तस्य देवत्वं लभन्ते गृहमेधिनः ॥ १७० ॥

तथा च ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि हर्म्येषु नोच्छिद्यन्ते कदाचन ॥ १७१ ॥
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः ।
पादशौचेन गोविन्दो अर्घ्याच्छम्भुस्तथातिथेः ॥ १७२ ॥

कौलिकोऽपि तच्छ्रुत्वा भार्यामाह । प्रिये गच्छ त्वमतिथिमादाय गृहं प्रति । पादशौचभोजनशयनादिभिः सत्कृत्य त्वं तत्रैव तिष्ठ । अहं तव कृते प्रभूतमासवमानेष्ये । एवमुक्त्वा प्रस्थितः । सापि भार्या पुंश्चली तमादाय प्रहसितवदना देवदत्तं ध्यायन्ती गृहं प्रतस्थे । अथवा साधु चेदमुच्यते ।

दुर्दिवसेऽसितपक्षे दुःसंचारासु नगरवीथीषु ।
पत्यौ विदेशयाते परं सुखं जघनचपलायाः ॥ १७३ ॥

तथा च ।

पर्यङ्केष्वास्तरणं पतिमनुकूलं मनोहरं शयनम् ।
तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतलुब्धाः ॥ १७४ ॥

तथा च ।

केलिः प्रदहति मज्जां शृङ्गारोऽस्थीनि चाटवः कटवः ।
बन्धक्याः परितोषो न स्यादनभीष्टदंपत्योः ॥ १७५ ॥

कुलपतनं जनगर्हां बन्धनमपि जीवितव्यसंदेहम् ।
अङ्गीकरोति तत्क्षणमबला परपुरुषसंरक्ता ॥ १७६ ॥

अथ सा गृहं गत्वा देवशर्मणे गतास्तरणां भग्नां खट्वां समर्प्येदमाह । भो भगवन्यावदहं ग्रामादागतां स्वसखीं संभाव्य द्रुतमागच्छामि तावत्त्वया मद्गृहेऽप्रमत्तेन भाव्यम् । एवमभिधाय शृङ्गारविधिं विधाय यावद्देवदत्तमुद्दिश्य व्रजति तावत्संमुखो मदविह्वलाङ्गो मुक्तकेशः पदे पदे स्खलन्गृहीतमद्यभाण्डस्तस्याः पतिः समायातः । तं च दृष्ट्वा सा द्रुततरं व्याघुट्य स्वगृहं प्रविश्य मुक्तशृङ्गारा यथापूर्वमभवत् । कौलिकोऽपि तां कृताद्भुतशृङ्गारां पलायमानां विलोक्य प्रागेव कर्णपरंपरया तस्या अपवादश्रवणात्क्षुभितहृदयः स्वाकारं निगूहमानः सदैवास्ते । ततश्च तथाविधं चेष्टितमवलोक्य दृष्टप्रत्ययः क्रोधवशगो गृहं प्रविश्य तामाह । पुंश्चलि क्व प्रस्थितासि । सा प्रोवाच । अहं त्वत्सकाशादागता न कुत्रचिन्निर्गता । तत्किं मद्यवशादप्रस्तुतं वदसि । अथवा साधु चेदमुच्यते ।

वैकल्यं धरणीपातमयथोचितजल्पनम् ।
संनिपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ १७७ ॥
करस्पन्दोऽम्बरत्यागस्तेजोहानिः सरागता ।
वारुणीसङ्गजावस्था भानुनाप्यनुभूयते ॥ १७८ ॥

सोऽपि तच्छ्रुत्वा प्रतिकूलवचनं वेषविपर्ययं चावलोक्य तामाह । पुंश्चलि चिरकालान्मया श्रुतस्तवापवादः । तदद्य स्वयं संजातप्रत्ययस्तव यथोचितं निग्रहं करोमीत्यभिधाय लगुडप्रहारैस्तां जर्जरीकृतदेहां विधाय स्थूणया सह दृढबन्धनेन बद्ध्वा सोऽपि मदविह्वलो निद्रावशमगमत् । अत्रान्तरे तस्याः सखी नापिती कौलिकं निद्रावशगतं विज्ञाय तां गत्वेदमाह । सखि स देवदत्तस्तस्मिन्स्थाने त्वां प्रतीक्षते तच्छीघ्रं गम्यतामिति । सा चाह । पश्य मेऽवस्थाम् । तत्कथं गच्छामि । ब्रूहि गत्वा तं कामिनं यदत्रावसरे न त्वया सह संगमः । सा प्राह । सखि मा मैवं वद । नायं कुलटाधर्मः । उक्तं च ।

विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम् ।
उष्ट्राणामिव तेषां मन्येऽहं शंसितं जन्म ॥ १७९ ॥

तथा च ।

संदिग्धे परलोके जनापवादे च जगति बहुचित्रे ।
स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः ॥ १८० ॥

अन्यच्च ।

यदि भवति दैवयोगात्पुमान्विरूपोऽपि बन्धकी रहसि ।
न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥ १८१ ॥

साब्रवीत् । यद्येवं तर्हि कथं दृढबन्धनेन बद्धा सती तत्र गच्छामि संनिहितश्चायं पापात्मा मत्पतिः । नापित्याह । सखि मदविह्वलोऽयं सूर्यकरस्पृष्टः प्रबोधं यास्यति । तदहं त्वामुन्मोचयामि । मामात्मस्थाने बद्ध्वा द्रुततरं देवदत्तं संभाव्यागच्छ । साब्रवीत् । एवमस्त्विति । तदनु सा नापिती तां स्वसखीं बन्धनाद्विमोच्य तस्याः स्थाने यथापूर्वमात्मानं बद्ध्वा तां देवदत्तसकाशे संकेतस्थानं प्रेषितवती । तथानुष्ठिते कौलिकः कस्मिंश्चित्क्षणे समुत्थाय किंचिद्गतकोपो विमदस्तामाह । हे परुषवादिनि यदद्यप्रभृति गृहान्निष्क्रमणं न करोषि न च परुषं वदसि ततस्त्वामुन्मोचयामि । नापित्यपि स्वरभेदभयाद्यावन्न किंचिदूचे तावत्सोऽपि भूयो भूय इदमेवाह । अथ सा यावत्प्रत्युत्तरं न प्रयच्छति तावत्तेन कुपितेन तीक्ष्णशस्त्रमादाय तस्या नासिकाच्छेदोऽकारि । आह च रे पुंश्चलि तिष्ठेदानीं न त्वां भूयस्तोषयिष्यामीति विलप्य पुनरपि निद्रावशमगमत् । देवशर्मापि वित्तनाशात्क्षुत्क्षामकण्ठो नष्टनिद्रस्तत्सर्वं स्त्रीचरित्रमपश्यत् । सापि कौलिकभार्या स्वेच्छया देवदत्तेन सह सुरतसुखमनुभूय कस्मिंश्चित्क्षणे स्वगृहमागत्य नापितीमिदमाह । अपि शिवं भवत्याः । नायं पापात्मा मम गताया उत्थितः । नापित्याह । शिवं नासिकया विना शेषस्य शरीरस्य । तद्द्रुतं मां मोचय यावन्नायं पश्यति येन स्वगृहं गच्छामीति । तथानुष्ठिते भूयोऽपि कौलिक उत्थाय तामाह । पुंश्चलि किमद्यापि न वदसि । किं भूयोऽप्यतो

दुष्टतरं कर्णच्छेदादिनिग्रहं करोमि । अथ सा सकोपं साधिक्षेपमिदमाह । धिग्मूढ को मां महासतीं धर्षयितुं व्यङ्गयितुं च समर्थः । ततः शृण्वन्तु सर्वे लोकपालाः ।

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मोऽपि जानाति नरस्य वृत्तम् ॥ १८२ ॥

तद्यदि मम सतीत्वमस्ति मनसापि परपुरुषो नाभिलषितस्ततो देवा भूयोऽपि मे नासिकां तादृग्रूपामक्षतां कुर्वन्तु । अथवा यदि मम चित्ते परपुरुषस्य भ्रान्तिरपि भवति ततो मां भस्मसान्नयन्तु । एवमुक्त्वा भूयोऽपि तमाह । भो दुरात्मन्पश्य मे सतीत्वप्रभावेण तादृगेव नासिका संवृत्ता । अथासावुल्मुकमादाय यावत्पश्यति तावत्तद्रूपां नासिकां च भूतले रक्तप्रवाहं च महान्तमपश्यत् । अथ स विस्मितमनास्तां बन्धनाद्विमुच्य शय्यायामारोप्य च चाटुशतैः पर्यतोषयत् । देवशर्मापि तं सर्ववृत्तान्तमालोक्य विस्मितमना इदमाह ।

शम्बरस्य च या माया या माया नमुचेरपि ।
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ १८३ ॥
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि ।
अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः ॥ १८४ ॥
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्त्रीबुद्ध्या न विशेष्येत तस्माद्रक्ष्याः कथं हि ताः ॥ १८५ ॥
अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम् ।
इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ॥ १८६ ॥

अन्यत्राप्युक्तम् ।

नातिप्रसङ्गः प्रमदासु कार्यो
नेच्छेद्बलं स्त्रीषु विवर्धमानम् ।
अतिप्रसक्तैः पुरुषैर्यतस्ताः
क्रीडन्ति काकैरिव लूनपक्षैः ॥ १८७ ॥

सुमुखेन वदन्ति वल्गुना प्रहरन्त्येव शितेन चेतसा ।
मधु तिष्ठति वाचि योषितां हृदये हालहलं महद्विषम् ॥१८८॥
अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ।
पुरुषैः सुखलेशवञ्चितैर्मधुलुब्धैः कमलं यथालिभिः ॥ १८९ ॥
कार्कश्यं स्तनयोर्दृशोस्तरलतालीकं मुखे दृश्यते
कौटिल्यं कचसंचये प्रवचने मान्द्यं त्रिके स्थूलता ।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
यासां दोषगणो गुणा मृगदृशां ताः किं नराणां प्रियाः ॥१९०॥

अपि च ।

आवर्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां संविधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
दुर्ग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं
स्त्रीयन्त्रं केन लोके विषममृतमयं धर्मनाशाय सृष्टम् ॥ १९१ ॥
एता हसन्ति च रुदन्ति च कार्यहेतो-
र्विश्वासयन्ति च परं न च विश्वसन्ति ।
तस्मान्नरेण कुलशीलवता सदैव
नार्यः श्मशानघटिका इव वर्जनीयाः ॥ १९२ ॥
कुर्वन्ति तावत्प्रथमं प्रियाणि
यावन्न जानन्ति नरं प्रसक्तम् ।
ज्ञात्वाथ तं मन्मथपाशबद्धं
ग्रस्तामिषं मीनमिवोद्धरन्ति ॥ १९३ ॥

किंच ।

समुद्रवीचीव चलस्वभावाः
संध्याभ्ररेखेव मुहूर्तरागाः ।
स्त्रियः कृतार्थाः पुरुषं निरर्थं
निष्पीडितालक्तकवत्त्यजन्ति ॥ १९४ ॥
अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ १९५ ॥

अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ १९६ ॥

एवमनेकानि सूक्तानि चिन्तयतस्तस्य परिव्राजकस्य निशा कृच्छ्रेणातिचक्राम । सा च दूतिका हस्तगतच्छिन्ननासिकाग्रा स्वगृहं गत्वा चिन्तयामास । किमिदानीं कर्तव्यम् । कथमेतन्महच्छिद्रं स्थगयितव्यम् । अथ तस्या एवं विचिन्तयन्त्या भर्ता कार्यवशाद्राजकुले पर्युषितः प्रत्यूषे स्वगृहमभ्युपेत्य द्वारदेशस्थः पौरकृत्योत्सुकतया तामाह । शीघ्रमानीयतां क्षुरभाण्डं येन क्षौरकर्मकरणाय गच्छामि । सापि च्छिन्ननासिका गृहमध्यस्थितैव कार्यकरणापेक्षया क्षुरभाण्डात्क्षुरमेकमादाय तस्याभिमुखं प्रेषयामास । नापितोऽप्युत्सुकतयाभाण्डं क्षुरमालोक्य तदभिमुखमेव तं क्षुरं प्राहिणोत् । एतस्मिन्नन्तरे सा दुष्टोर्ध्वबाहू विधाय फूत्कुर्वती गृहान्निश्चक्राम । पापेनानेन मम सदाचारवर्तिन्याः पश्यत नासिकाच्छेदो विहितः । तत्परित्रायतां तत्परित्रायताम् । अत्रान्तरे राजपुरुषा अभ्युपेत्य तं नापितं लगुडप्रहारैर्जर्जरीकृत्य दृढं बद्ध्वा तया छिन्ननासिकया सह धर्माधिकरणस्थानं नीत्वा सभ्यानूचुः । शृण्वन्तु भवन्तः सभासदो यदनेन नापितेनापराधं विना स्त्रीरत्नमेतद्व्यङ्गितम् । तदस्य यद्युज्यते तत्क्रियताम् । ततस्ते सभ्या ऊचुः । रे नापित किमर्थं त्वयेयं स्त्री व्यङ्गिता । किमनया परपुरुषोऽभिलषित उतास्वित्प्राणद्रोहः कृतः किंवा चौर्यकर्माचरितम् । तत्कथ्यतामस्या अपराधः । अथ तं नापितं तूष्णींभूतं दृष्ट्वा पुनः सभ्या ऊचुः । अहो सत्यमेतद्राजपुरुषाणां वचः । पापात्मायम् । अनेनेयं निर्दोषा वराकी दूषिता । उक्तं च ।

भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतिततेजाः ।
भवति हि पापं कृत्वा स्वकर्मसंत्रासितः पुरुषः ॥ १९७ ॥

तथा च ।

आयाति स्खलितैः पादैर्मुखवैवर्ण्यसंयुतः ।
ललाटस्वेदभाग्भूरिगद्गदं भाषते वचः ॥ १९८ ॥

अधोदृष्टिर्भवेत्कृत्वा पापं प्राप्तः सभां नरः ।
तस्माद्यत्नात्परिज्ञेयश्चिह्नैरेतैर्विचक्षणैः ॥ १९९ ॥

अन्यच्च ।

प्रसन्नवदनो हृष्टः स्पष्टवाक्यः सरोषदृक् ।
सभायां वक्ति सामर्षः सावष्टम्भो नरः शुचिः ॥ २०० ॥

तदेष दुष्टचरित्रलक्षणो दृश्यते। स्त्रीधर्षणाद्वध्य इति। तच्छूलायामारोप्यतामिति। अथ वध्यस्थाने तं नीयमानमवलोक्य देवशर्मा तान्धर्माधिकारिणो गत्वा प्रोवाच। भो भोः सभासदः। अन्यायेनैष वराको नापितो वध्यते। साधुसमाचारोऽयम्। तच्छ्रूयतां मे वाक्यम्। जम्बुको हुडुयुद्धेनेति। अथ ते सभ्या ऊचुः। भो भगवन्कथमेतत्। ततश्च देवशर्मा तेषां त्रयाणामपि वृत्तान्तं सविस्तरमकथयत्। तदाकर्ण्य सुविस्मितमनसस्ते नापितं विमोच्य मिथः प्रोचुः। अहो।

अवध्यो ब्राह्मणो बालः स्त्री तपस्वी च रोगभाक् ।
विहिता व्यङ्गिता तेषामपराधे महत्यपि ॥ २०१ ॥

तस्याः पुनः कर्णच्छेदः कार्यः। तथानुष्ठिते देवशर्मापि वित्तनाशसमुद्भूतशोकरहितः पुनरपि स्वकीयं मठायतनमगमत्।

अतोऽहं ब्रवीमि जम्बुको हुडुयुद्धेनेति।

करटक आह। यद्धूर्तोऽपि देवशर्मा तेनाषाढभूतिना कथं वञ्चितः। दमनक आह।

सुप्रयुक्तस्य दम्भस्य ब्रह्माप्यन्तं न गच्छति ।
कौलिको विष्णुरूपेण राजकन्यां निषेवते ॥ २०२ ॥

करटक आह। भ्रातः कथमेतत्। सोऽब्रवीत्।

## कथा ५.

कस्मिंश्चिदधिष्ठाने कौलिकरथकारौ प्रतिवसतः स्म। तत्र तौ जन्मप्रभृति सहचारिणावास्ताम्। परस्परमतीवस्नेहपरौ सकलस्थानवि

हारिणौ सदैव कालं नयतः। अथ कदाचित्तत्राधिष्ठाने कस्मिंश्चिद्देवायतने यात्रामहोत्सवः संवृत्तः। तत्र च नटनर्तकचारणसंकुले नानादेशागतजनावृते तौ सहचरौ भ्राम्यन्तौ कांचिद्राजकन्यां करेणुकारूढां सर्वलक्षणसनाथां कञ्चुकिवर्षधरपरिवारितां देवतादर्शनाय समायातां दृष्टवन्तौ। अथासौ कौलिकस्तां दृष्ट्वा विषार्दित इव दुष्टग्रहगृहीत इव कामशरैर्हन्यमानः सहसा भूतले निपपात। अथ तं तदवस्थमवलोक्य रथकारस्तद्दुःखदुःखित आप्तपुरुषैस्तं समुत्क्षिप्य स्वगृहमानाययत्। तत्र च विविधैः शीतोपचारैश्चिकित्सकोपदिष्टैर्मन्त्रवादिभिरुपचार्यमाणश्चिरात्कथंचित्सचेतनो बभूव। ततो रथकारेण पृष्टः। भो मित्र किमेवं त्वमकस्माद्विचेतनो जातः। तत्कथ्यतामात्मस्वरूपम्। स आह। वयस्य यद्येवं तच्छृणु मे रहस्यं येन सर्वामात्मवेदनां ते वदामि। यदि त्वं मां सुहृदं मन्यसे ततः काष्ठप्रदानेन प्रसादः क्रियताम्। क्षम्यतां यद्वा किंचित्प्रणयातिरेकादयुक्तं तव मयानुष्ठितम्। सोऽपि तदाकर्ण्य बाष्पपिहितनयनः सगद्गदमुवाच। वयस्य तद्दुःखकारणं किं तव। तद्वद येन प्रतीकारः क्रियते यदि शक्यते कर्तुम्। उक्तं च यतः।

औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम्।
असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम्॥ २०३॥

तदेषां चतुर्णां यदि साध्यं भविष्यति तदहं साधयिष्यामि। कौलिक आह। वयस्य एतेषामन्येषामपि सहस्रश उपायानामसाध्यं तन्मम दुःखम्। तस्मान्मम मरणे मा कालक्षेपं कुरु। रथकार आह। भो मित्र यद्यप्यसाध्यं तथापि निवेदय येनाहमपि तदसाध्यं मत्वा त्वया सह वह्नौ प्रविशामि। न क्षणमपि त्वद्वियोगं सहिष्ये। एष मे निश्चयः। कौलिक आह। वयस्य यासौ राजकन्या करेणुकारूढा तत्रोत्सवे दृष्टा तस्या दर्शनानन्तरं मकरध्वजेन ममेयमवस्था विहिता तन्न शक्नोमि तद्वेदनां सोढुम्। रथकारोऽपि सस्मितमिदमाह। वयस्य दिष्ट्या यद्येवं तर्हि सिद्धं नः प्रयोजनम्। तदद्यैव तया सह संगमः क्रियतामिति। कौलिक आह। वयस्य यत्र कन्यान्तःपुरे

वायुं मुक्त्वान्यस्य प्रवेशो नास्ति तत्र रक्षापुरुषाधिष्ठिते कथं मम तया सह संगमः। तत्किं मामसत्यवचनेन विडम्बयसि । रथकार आह। मित्र पश्य मे बुद्धिप्रभावम्। एवमभिधाय तत्क्षणात्कीलसंचारिणं वैनतेयं सबाहुयुगलं चिरजार्जुनवृक्षदारुणा शङ्खचक्रगदापद्मान्वितं सकिरीटकौस्तुभमघटयत्। ततस्तस्मिन्कौलिकं समारोप्य विष्णुचिह्नचिह्नितं कृत्वा कीलसंचरणविज्ञानं च दर्शयित्वा प्रोवाच। वयस्य अनेन विष्णुरूपेण गत्वा कन्यान्तःपुरे निशीथे राजकन्यामेकाकिनीं सप्तभूमिकप्रासादप्रान्तगतां मुग्धस्वभावां त्वां वासुदेवं मन्यमानां स्वकीयमिथ्यावक्रोक्तिभी रञ्जयित्वा वात्स्यायनोक्तविधिना भज। कौलिकोऽपि तदाकर्ण्य वासुदेवरूपी रहस्तदा गत्वा तत्र तामाह। राजपुत्रि सुप्ता किंवा जागर्षि। अहं तव कृते समुद्रात्सानुरागो लक्ष्मीं विहायैवागतः। तत्क्रियतां मया सह संगम इति। सापि गरुडारूढं चतुर्भुजं सायुधं कौस्तुभोपेतमवलोक्य सविस्मया शयनादुत्थाय प्रोवाच। भगवन् अहं मानुषी कीटिकाशुचिर्भगवांस्त्रैलोक्यपावनो वन्दनीयश्च । तत्कथमेतद्युज्यते । कौलिक आह। सुभगे सत्यमभिहितं भवत्या परं किंतु राधा नाम मे भार्या गोपकुलप्रसूता प्रथममासीत्। सा त्वमत्रावतीर्णा। तेनाहमायातः। इत्युक्ता सा प्राह। भगवन्यद्येवं तन्मे तातं प्रार्थय। सोऽप्युपकल्प्य तुभ्यं मां प्रयच्छति। कौलिक आह। सुभगे नाहं दर्शनपथं मानुषाणां गच्छामि किं पुनरालापकरणम् । त्वं गान्धर्वेण विवाहेनात्मानं प्रयच्छ । नो चेच्छापं दत्त्वा सान्वयं ते पितरं भस्मसात्करिष्यामीति। एवमभिधाय गरुडादवतीर्य सव्ये पाणौ कृत्वा तां सभयां सलज्जां वेपमानां शय्यायामनयत्ततश्च रात्रिशेषं यावद्वात्स्यायनोक्तविधिना निषेव्य प्रत्यूषेऽलक्षितो जगाम। एवं तां तस्य नित्यं सेवमानस्य कालो याति। अथ कदाचित्कञ्चुकिनस्तस्या अधरोष्ठप्रवालखण्डनं दृष्ट्वा मिथः प्रोचुः। अहो पश्यतास्या राजकन्यायाः पुरुषोपभुक्ताया इव शरीरावयवाः संभाव्यन्ते। तत्कथमयं सुरक्षितेऽप्यस्मिन्गृह एवंविधो व्यवहारः। तद्राज्ञे निवेदयामः। एवं निश्चित्य सर्वे समेत्य राजानं प्रोचुः। देव वयं न विद्मः परं

सुरक्षितेऽपि कन्यान्तःपुरे कश्चित्प्रविशति तद्देवः प्रमाणमिति । तच्छ्रुत्वा राजातीव व्याकुलितचित्तो देवीं रहःस्थां प्रोवाच । देवि ज्ञायतां किमेते कञ्चुकिनो वदन्ति । तस्य कृतान्तः कुपितो येनैतदेवं क्रियते । देव्यपि तदाकर्ण्य व्याकुलीभूता सत्वरं गत्वा तां खण्डिताधरां नखविकर्तितशरीरावयवामपश्यत् । आह च । आः पापे कुलकलङ्किनि किमेवं शीलखण्डनं कृतम् । कोऽयं कृतान्तावलोकितस्त्वत्सकाशमभ्येति । तत्कथ्यतामेवंगतेऽपि सत्यम् । तच्छ्रुत्वा सापि त्रपाधोमुखी सकलं विष्णुरूपकौलिकवृत्तान्तं निवेदयामास । सापि तच्छ्रुत्वा प्रहसितवदना पुलकाङ्कितसर्वाङ्गी सत्वरं गत्वा राजानमूचे । देव दिष्ट्या वर्धसे । नित्यमेव निशीथे भगवान्नारायणः कन्यकापार्श्वेऽभ्येति । तेन गान्धर्वविवाहेन सा विवाहिता । तदद्य त्वया मया च रात्रौ वातायनगताभ्यां निशीथे द्रष्टव्यो यतो न स मानुषैः सहालापं करोति । तच्छ्रुत्वा हर्षितस्य राज्ञस्तद्दिनं वर्षशतप्रायमिव कथंचिज्जगाम । ततस्तु रात्रौ निभृतो भूत्वा राज्ञीसहितो राजा वातायनस्थो गगनासक्तदृष्टिर्यावत्तिष्ठति तावद्गरुडारूढं तं शङ्खचक्रगदापद्महस्तं यथोक्तचिह्नाङ्कितं व्योम्नोऽवतरन्तमपश्यत् । ततः सुधापूरप्लावितमिवात्मानं मन्यमानस्तामुवाच । प्रिये नास्त्यन्यो धन्यतरो मत्तस्त्वत्तश्च यत्प्रसूतिं नारायणो भजते । तत्सिद्धाः सर्वेऽस्माकं मनोरथाः । अधुना जामातृप्रभावेण सर्वा वसुमती वशे भविष्यति । एवं निश्चित्य सर्वैः सीमाधिपैः सह मर्यादाव्यतिक्रममकरोत् । ते च तं मर्यादाव्यतिक्रमेण वर्तमानमालोक्य सर्वे समेत्य तेन सह विग्रहं चक्रुः । अत्रान्तरे स राजा देवीमुखेन तां दुहितरमुवाच । पुत्रि त्वयि दुहितरि स्थितायां किमेवं युज्यते यत्सर्वे पार्थिवा मया सह विग्रहं कुर्वन्ति । तत्संबोध्योऽद्य भर्ता त्वया यथा स मम शत्रून्व्यापादयति । अथ तया स कौलिको रात्रौ सविनयमभिहितः । भगवन् त्वयि जामातरि स्थिते मम तातो यच्छत्रुभिः परिभूयते तन्न युक्तम् । तत्प्रसादं कृत्वा सर्वांस्तान्व्यापादय । कौलिक आह । सुभगे कियन्मात्रास्त्वेते तव पितुः शत्रवः । तद्वि-

श्वस्ता भव क्षणेनापि सुदर्शनचक्रेण सर्वांस्तिलशः खण्डयिष्यामि। अथ गच्छता कालेन समस्तदेशः शत्रुभिर्व्याप्तः। अस्य केवलं स राजा प्राकारशेषः कृतः। तथापि वासुदेवरूपधरं कौलिकमजानन्राजा नित्यमेव विशेषतः कर्पूरागुरुकस्तूरिकादिपरिमलविशेषान्नानाप्रकारवस्त्रभक्ष्यपेयांश्च प्रेषयन्दुहितृमुखेन तमूचे। भगवन्प्रभाते नूनं स्थानभङ्गो भविष्यति यतो यवसेन्धनक्षयः संजातस्तथा सर्वोऽपि जनः प्रहारैर्जर्जरितदेहः संवृत्तो योद्धुमक्षमः प्रचुरो मृतश्च। तदेवं ज्ञात्वात्र काले यदुचितं भवति तद्विधेयमिति। तच्छ्रुत्वा कौलिकोऽप्यचिन्तयद्यत्स्थानभङ्गे जाते ममानया सह वियोगो भविष्यति तस्माद्गरुडमारुह्य सायुधमात्मानमाकाशे दर्शयामि। कदाचिन्मां वासुदेवं मन्यमानास्ते साशङ्का राज्ञो योद्धृभिर्हन्यन्ते। उक्तं च।

निर्विषेणापि सर्पेण कर्तव्या महती फणा।
विषं भवतु मा भूद्वा फटाटोपो भयंकरः॥ २०४॥

अथवा मम स्थानार्थं उद्यतस्य मृत्युर्भवति तथापि सुन्दरतरम्। उक्तं च।

गवामर्थे ब्राह्मणार्थे स्वाम्यर्थे स्त्रीकृतेऽथवा।
स्थानार्थे यस्त्यजेत्प्राणांस्तस्य लोकाः सनातनाः॥ २०५॥

एवं निश्चित्य प्रत्यूषे दन्तधावनं विधाय तामूचे। सुभगे समस्तैः शत्रुभिर्हतैरन्नं पानं चास्वादयिष्यामि। किं बहुना। त्वयापि सह संगमं ततः करिष्यामि। परं वाच्यस्त्वया निजपिता यत्त्वया प्रभाते सर्वसैन्येन सह नगरान्निष्क्रम्य योद्धव्यमहं चाकाशस्थस्तान्निस्तेजसः करिष्यामि पश्चात्सुखेन भवता हन्तव्याः। यदि पुनरहं तान्स्वयमेव सूदयामि तत्तेषां पापात्मनां वैकुण्ठीया गतिः स्यात्। तस्मात्ते तथा कर्तव्या यथा पलायन्तो हन्यमानाः स्वर्गं न गच्छन्ति। सापि तदाकर्ण्य पितुः समीपं गत्वा सर्वं वृत्तान्तं न्यवेदयत्। राजापि तस्या वाक्यं श्रद्दधानः प्रत्यूषे समुत्थाय सुसंनद्धसैन्यो युद्धार्थं निर्जगाम। कौलिकोऽपि मरणकृतनिश्चयश्चापपाणिर्गगनगतिर्गरुडारूढो युद्धाय प्रस्थितः। अत्रान्तरे भगवता नारायणे-

नातीतानागतवर्तमानवेदिना स्मृतमात्रो वैनतेयः संप्राप्तो विहस्य प्रोक्तः। भो गरुत्मन् जानासि त्वं यन्मम रूपेण कौलिको दारुमयगरुडे समारूढो राजकन्यां कामयते। सोऽब्रवीत्। देव सर्वं ज्ञायते तच्चेष्टितम्। तत्किं कुर्मः सांप्रतम्। श्रीभगवानाह। अद्य कौलिको मरणे कृतनिश्चयो विहितनियमो युद्धार्थं विनिर्गतः। स नूनं प्रधानक्षत्रियशराहतो निधनमेष्यति। तस्मिन्हते सर्वो जनो वदिष्यति यत्प्रभूतक्षत्रियैर्मिलित्वा वासुदेवो गरुडश्च निपातितः। ततः परं लोक आवयोः पूजां न करिष्यति। ततस्त्वं द्रुततरं तत्र दारुमयगरुडे संक्रमणं कुरु। अहमपि कौलिकशरीरे प्रवेशं करिष्यामि येन स शत्रून्व्यापादयति। ततश्च शत्रुवधादावयोर्माहात्म्यवृद्धिः स्यात्। अथ तथेति प्रतिपन्ने श्रीभगवान्नारायणस्तच्छरीरे संक्रमणमकरोत्। ततो भगवन्माहात्म्येन गगनस्थः स कौलिकः शङ्खचक्रगदाचापचिह्नितः क्षणादेव लीलयैव सर्वानपि प्रधानक्षत्रियान्निस्तेजसश्चकार। ततस्तेन राज्ञा स्वसैन्यपरिवृतेन जिता निहताश्च ते सर्वेऽपि शत्रवः। जातश्च लोकमध्ये प्रवादो यथानेन विष्णुजामातृप्रभावेण सर्वे शत्रवो निहता इति। कौलिकोऽपि तान्हतान्दृष्ट्वा प्रमुदितमना गगनादवतीर्णः सन्यावद्राजामात्यपौरलोकास्तं नगरवास्तव्यं कौलिकं पश्यन्ति ततः पृष्टः किमेतदिति। ततः सोऽपि मूलादारभ्य सर्वं प्राग्वृत्तान्तं न्यवेदयत्। ततश्च कौलिकसाहसानुरञ्जितमनसा शत्रुवधादवाप्ततेजसा राज्ञा सा राजकन्या सकलजनप्रत्यक्षं विवाहविधिना तस्मै समर्पिता देशश्च प्रदत्तः। कौलिकोऽपि तया सार्धं पञ्चप्रकारं जीवलोकसारं विषयसुखमनुभवन्कालं निनाय॥

अतस्तूच्यते सुप्रयुक्तस्य दम्भस्येति।

करटक आह। अथैवंविधे व्यतिकरे किं कार्यमावाभ्याम्। दमनक आह। एवंविधेऽपि समये मम बुद्धिस्फुरणं भविष्यति येन प्रभोः संजीवकं विश्लेषयिष्यामि। उक्तं च।

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम्॥ २०६॥

करटक आह। यद्यपि ते बुद्धिप्रागल्भ्यं तथापि त्वं पिङ्गलकात्त्वं वियोजयितुमसमर्थ एव। दमनक आह। भ्रातः असमर्थोऽपि समर्थ एव। उक्तं च।

उपायेन हि यत्कुर्यात्तन्न शक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥ २०७ ॥

करटक आह। कथमेतत्। सोऽब्रवीत्।

## कथा ६.

कस्मिंश्चित्प्रदेशे महातरौ वायसदंपती प्रतिवसतः स्म। अथ तयोः प्रसवकाले वृक्षविवरान्निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ निर्वेदादन्यवृक्षमूलनिवासिनं प्रियसुहृदं शृगालं गत्वोचतुः। भद्र किमेवंविधे संजात आवयोः कर्तव्यं भवति। एष तावद्दुष्टात्मा कृष्णसर्पो विवरान्निर्गत्यावयोर्बालकान्भक्षयत्येव। तत्कथ्यतां तद्रक्षार्थं कश्चिदुपायः।

यस्य क्षेत्रं नदीतीरे भार्या च परसंगता।
ससर्पे च गृहे वासः कथं स्यात्तस्य निर्वृतिः ॥ २०८ ॥

अन्यच्चास्माकमपि तत्रस्थानां प्रतिदिनं प्राणसंचयः। स आह। नात्र विषये विषादः कार्यः। नूनं स लुब्धो नोपायमन्तरेण वध्यः स्यात्।

उपायेन जयो यादृग्रिपोस्तादृङ्न हेतिभिः।
उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते ॥ २०९ ॥

तथा च।

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥ २१० ॥

तावूचतुः। कथमेतत्। सोऽब्रवीत्।

## कथा ७.

अस्ति कस्मिंश्चित्प्रदेशे नानाजलचरसनाथं सरः। तत्र च कृता-

अथो बक एको वृद्धभावमुपागतो मत्स्यान्व्यापादयितुमसमर्थः। ततश्च क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो मुक्ताफलसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन्रुरोद। एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे। माम किमद्य त्वयाहारवृत्तिर्नानुष्ठीयते। केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते। स आह। वत्स सत्यमुपलक्षितं भवता। मया हि मत्स्यादनं प्रति परमवैराग्यतया सांप्रतं प्रायोपवेशनं कृतं तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि। कुलीरकस्तच्छ्रुत्वा प्राह। किं तद्वैराग्यकारणम्। स प्राह। वत्स अहमस्मिन्सरसि जातो वृद्धिं गतश्च। तन्मयैतच्छ्रुतं यद्द्वादशवार्षिक्यनावृष्टिः संपद्यते लग्ना। कुलीरक आह। कस्मात्तच्छ्रुतम्। बक आह। दैवज्ञमुखात्। यतः शनैश्चरो रोहिणीशकटं भित्त्वा भौमश्च शुक्रश्च प्रयास्यति। उक्तं च वराहमिहिरेण।

यदि रोहिण्याः शकटं भिनत्ति रविनन्दनो गगनवीथ्याम्।
द्वादश वर्षाणि तदा न हि वर्षति वासवो भूमौ ॥ २११ ॥

तथा च।

प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा।
भस्मास्थिशकलकीर्णा कापालमिव व्रतं धत्ते ॥ २१२ ॥

तथा च।

रोहिणी शकटमर्कनन्दनश्चेद्भिनत्ति रुधिरोऽथवा शशी।
किं वदामि तदनिष्टसागरे संक्षयं जगदशेषमुपैति ॥ २१३ ॥

तदेतत्सरः स्वल्पतोयं वर्तते। शीघ्रं शोषं यास्यति। अस्मिञ्शुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्चैते सर्वे तोयाभावान्नाशं यास्यन्ति। तत्तेषां वियोगं द्रष्टुमहमसमर्थः। तेनैतत्प्रायोपवेशनं कृतम्। सांप्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति। अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति।

ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास। अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयस्तमभ्युपेत्य पप्रच्छुः। माम अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति। बक आह। अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः पद्मिनीखण्डमण्डितं यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेति। तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि। अथ ते तत्र विश्वासमापन्नास्तात मातुल भ्रातरिति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समन्तात्परितस्थुः। सोऽपि दुष्टाशयः क्रमेण तान्पृष्ठमारोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासंदेशकैर्मनांसि रञ्जयन्नित्य मिवाहारवृत्तिमकरोत्। अन्यस्मिन्दिने स कुलीरकेणोक्तः। माम मया सह ते प्रथमः स्नेहसंभाषः संजातः। तत्किं मां परित्यज्यान्यान्नयसि। तस्मादद्य मे प्राणत्राणं कुरु। तदाकर्ण्य सोऽपि दुष्टाशयश्चिन्तितवान्। निर्विण्णोऽहं मत्स्यमांसादनेन। तदद्यैतं कुलीरकं व्यञ्जनस्थाने करोमि। इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः। कुलीरकोऽपि दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्। माम कियद्दूरे स जलाशयः। मदीयभारेणातिश्रान्तस्त्वं तत्कथय। सोऽपि मन्दधीर्जलचरोऽयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह। कुलीरक कुतोऽन्यो जलाशयः। मम प्राणयात्रेयम्। तस्मात्स्मर्यतामात्मनोऽभीष्टदेवता। त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि। इत्युक्तवति तस्मिन्स्ववदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च। अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद। ततः सर्वैरेव जलचरैः पृष्टः। भोः कुलीरक किंनिमित्तस्त्वं पश्चादायातः। कुशलकारणं तिष्ठति। स मातुलोऽपि नायातः। तत्किं चिरयसि। वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः। एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच। मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः। तन्मयायुःशेषतया तस्य विश्वासघातकस्याभि-

प्रायं ज्ञात्वा ग्रीवेयमानीता । तदलं संभ्रमेण । अधुना सर्वजलचराणां क्षेमं भविष्यति ॥

अतोऽहं ब्रवीमि भक्षयित्वा बहून्मत्स्यानिति ।

वायस आह । भद्र तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति । शृगाल आह । गच्छतु भवान्किंचिन्नगरं राजाधिष्ठानम् । तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिप येन सर्पस्तद्ग्रहणेन वध्यते । अथ तत्क्षणात्काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ । ततश्च काकी किंचित्सरः प्राप्य यावत्पश्यति तावत्तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं जलासन्नं न्यस्तकनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते । अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे । ततश्च कञ्चुकिनो वर्षधराश्च तन्नीयमानमुपलक्ष्य गृहीतलगुडाः सत्वरमनुययुः । काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता । अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति । ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः । वायसदंपती अपि ततः परं सुखेन वसतः ॥

अतोऽहं ब्रवीम्युपायेन हि यत्कुर्यादिति । तन्न किंचिदिह बुद्धिमतामसाध्यमस्ति । उक्तं च ।

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ २१४ ॥

करटक आह । कथमेतत् । स आह ।

## कथा

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म । अथासौ वीर्यातिरेकान्नित्यमेवानेकान्मृगशशकादीन्व्यापादयन्नोपरराम । अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः । स्वामिन् किमनेन सकलमृगवधेन नित्यमेव यत-

स्तवैकेनापि मृगेण तृप्तिर्भवति । तत्क्रियतामस्माभिः सह समयधर्मः । अद्यप्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षार्थं समेष्यति । एवं कृते तव तावत्प्राणयात्रा क्लेशं विनापि भविष्यत्यस्माकं च पुनः सर्वोच्छेदनं न स्यात् । तदेष राजधर्मोऽनुष्ठीयताम् । उक्तं च ।

शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् ।
रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ २१५
विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च ।
प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ २१६ ॥
प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् ।
पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ २१७ ॥
गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः ।
पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥ २१८ ॥
अजामिव प्रजां मोहाद्यो हन्यात्पृथिवीपतिः ।
तस्यैका जायते तृप्तिर्न द्वितीया कथंचन ॥ २१९ ॥
फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ २२० ॥
नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ २२१ ॥
यथा गौर्दुह्यते काले पाल्यते च तथा प्रजाः ।
सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥ २२२ ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ २२३ ॥
हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्महीपतेः ॥ २२४ ॥
लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः ।
लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥ २२५ ॥

अथ तेषां तदाकर्ण्य भासुरक आह । अहो सत्यमभिहितं भवद्भिः परं यदि ममाप्युपविष्टस्यात्र नित्यमेव नैकः श्वापदः समागमिष्यति तन्नूनं सर्वानपि भक्षयिष्यामि । अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजस्तत्रैव वने निर्भयाः पर्यटन्ति । एकश्च प्रतिदिनं क्रमेण याति । वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्रकलत्रनाशभीतो वा तेषां मध्यात्तस्याहारार्थं मध्याह्नसमय उपतिष्ठते । अथ कदाचिज्जातिक्रमाच्छशकस्य वारः समायातः । स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन्वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता कूपः संदृष्टः । यावत्कूपोपरि याति तावत्कूपमध्य आत्मनः प्रतिबिम्बं ददर्श । तेन हृदये चिन्तितं यद्भव्य उपायोऽस्ति । अहं भासुरकं प्रकोप्य स्वबुध्द्यास्मिन्कूपे पातयिष्यामि । अथासौ दिनशेषे भासुरकसमीपं प्राप्तः । सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्कणी परिलेलिहद्व्यचिन्तयत् । अहो प्रातराहाराय निःसत्त्वं वनं मया कर्तव्यम् । एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः । अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह । रे शशकाधम एकं तावत्त्वं लघुः प्राप्तोऽपरं वेलातिक्रमेण तदस्मादपराधात्त्वां निपात्य प्रातः सकलान्यपि मृगकुलान्युच्छेदयिष्यामि । अथ शशकः सविनयं प्रोवाच । स्वामिन्नापराधो मम न च सत्त्वानाम् । तच्छ्रूयतां कारणम् । सिंह आह । सत्वरं निवेदय यावद्दंष्ट्रान्तर्गतो न भवसीति । शशक आह । समस्तमृगैरद्य स्वामिञ्जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः । ततश्चाहमागच्छन्नन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्याभिहितः । रे क प्रस्थिता यूयम् । अभीष्टदेवतां स्मरत । ततो मयाभिहितम् । वयं स्वामिनो भासुरकस्य सिंहस्य सकाश आहारार्थं समयधर्मेण गच्छामः । ततस्तेनाभिहितम् । यद्येवं तर्हि मदीयमेतद्वनं मया सह समयधर्मेण सर्वैः श्वापदैर्वर्तितव्यम् । चौररूपी स भासुरकः । अथ यदि सोऽत्र राजा ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततर-

मागच्छ येन द्वयोर्मध्याद्यः कश्चित्पराक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यतीति । अतोऽहं तेनादिष्टः स्वामिसकाशमागतः । एतद्वेलाव्यतिक्रमकारणम् । तदत्र स्वामी प्रमाणम् । तच्छ्रुत्वा भासुरक आह । भद्र यद्येवं तर्हि सत्वरं दर्शय मे तं चौरसिंहं येनाहं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि । उक्तं च ।

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां न तं कुर्यात्कथंचन ॥ २२६ ॥
यत्र न स्यात्फलं भूरि यत्र च स्यात्पराभवः ।
न तत्र मतिमान्युद्धं समुत्पाद्य समाचरेत् ॥ २२७ ॥

शशक आह । स्वामिन्सत्यमिदम् । स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः । परं स दुर्गाश्रयः । दुर्गान्निष्क्रम्य वयं तेन विष्कम्भिताः । ततो दुर्गगतो दुःसाध्यो भवति रिपुः । उक्तं च ।

न गजानां सहस्रेण न च लक्षेण वाजिनाम् ।
यत्कृत्यं सिध्यति राज्ञां दुर्गेणैकेन विग्रहे ॥ २२८ ॥
शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः ।
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः ॥ २२९ ॥
पुरा गुरोः समादेशाद्धिरण्यकशिपोर्भयात् ।
शक्रेण विहितं दुर्गं प्रभावाद्विश्वकर्मणः ॥ २३० ॥
तेनापि च वरो दत्तो यस्य दुर्गं स भूपतिः ।
विजयी स्यात्ततो भूमौ दुर्गाणि स्युः सहस्रशः ॥ २३१ ॥
दंष्ट्राविरहितो नागो मदहीनो यथा गजः ।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ २३२ ॥

तच्छ्रुत्वा भासुरक आह । भद्र दुर्गस्थमपि दर्शय तं चौरसिंहं येन व्यापादयामि । उक्तं च ।

जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत् ।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ २३३ ॥

तथा च ।

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वत्स्यन्तावामयः स च ॥ २३४ ॥

अपि च ।

उपेक्षितः क्षीणबलोऽपि शत्रुः
प्रमाददोषात्पुरुषैर्मदान्धैः ।
साध्योऽपि भूत्वा प्रथमं ततोऽसा-
वसाध्यतां व्याधिरिव प्रयाति ॥ २३५ ॥

तथा च ।

आत्मनः शक्तिमुद्वीक्ष्य मनोत्साहं च यो व्रजेत् ।
शत्रून्हन्ति स एकोऽपि क्षत्रियान्भार्गवो यथा ॥ २३६ ॥

शशक आह । अस्त्येतत्तथापि तस्य सामर्थ्यमविदित्वा न युज्यते गन्तुम् । उक्तं च ।

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो वह्नौ नाशं याति पतङ्गवत् ॥ २३७ ॥
यो बलात्प्रोन्नतं याति निहन्तुं सबलोऽप्यरिः ।
विमदः स निवर्तेत शीर्णदन्तो गजो यथा ॥ २३८ ॥

भासुरक आह । यद्यप्येवं तथापि त्वं दर्शय तं चौरसिंहं यथा व्यापादयामि । शशक आह । यद्येवं तर्ह्यागच्छतु स्वामी । एवमुक्त्वाग्रे व्यवस्थितः । ततश्च तेनागच्छता यः कूपो दृष्टोऽभूत्तमेव कूपमासाद्य भासुरकमाह । स्वामिन्कस्ते प्रतापं सोढुं समर्थः । त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गम् । तदागच्छ यथा दर्शयामीति । भासुरक आह । दर्शय मे दुर्गम् । तदनु दर्शितस्तेन कूपः । ततः सोऽपि मूर्खः सिंहः कूपमध्य आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच । ततः प्रतिशब्देन कूपमध्याद्द्विगुणतरो नादः समुत्थितः । अथ तेन तं शत्रुं मत्वात्मानं तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः । शशकोऽपि हृष्टमनाः सर्वमृगानानन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म ॥

अतोऽहं ब्रवीमि यस्य बुद्धिर्बलं तस्येति ।

तद्यदि भवान्कथयति तत्तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेण मैत्रीभेदं करोमि । करटक आह । भद्र यद्येवं तर्हि गच्छ । शिवास्ते पन्थानः सन्तु । यथाभिप्रेतमनुष्ठीयताम् । अथ दमनकः संजीवकवियुक्तं पिङ्गलकमवलोक्य तत्रान्तरे प्रणम्याग्रे समुपविष्टः । पिङ्गलकोऽपि तमाह । भोः कस्माच्चिराद्दृश्यसे । दमनक आह । न किंचिद्देवपादानामस्माभिः प्रयोजनं तेन नागच्छामः । तथापि राजप्रयोजनविनाशमवलोक्य संदह्यमानहृदयो व्याकुलतया स्वयमेवाभ्यागतो वक्तुम् । उक्तं च ।

शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ २३९ ॥

अथ तस्य साभिप्रायं वचनमाकर्ण्य पिङ्गलक आह । किं वक्तुमना भवान् । तत्कथ्यतां यत्कथनीयमस्ति । स प्राह । देव संजीवको युष्मत्पादानामुपरि द्रोहबुद्धिरिति । विश्वासगतस्य मम विजन इदमाह । दमनक दृष्टास्य पिङ्गलकस्य सारासारता । तदहमेनं हत्वा सकलमपि मृगाधिपत्यं त्वत्साचिव्यसमन्वितं करिष्यामि । पिङ्गलकोऽपि तद्वज्रसारप्रहारसदृशं दारुणं तद्वचः समाकर्ण्य मोहमुपगतो न किंचिदूचे । स दमनकोऽपि तस्य तमाकारमालोक्य चिन्तितवान् । अयं तावत्संजीवकनिबद्धरागस्तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यतीति । उक्तं च ।

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यान्नृपतेः स राज्यमथवा प्राणानपि च्यावयेत् ॥२४०॥

किमत्र युक्तमिति । पिङ्गलकोऽपि चेतनां समासाद्य कथमपि तमाह । दमनक संजीवकस्तावत्प्राणसमो भृत्यः स कथं ममोपरि द्रोहबुद्धिं करोति । दमनक आह । देव भृत्योऽभृत्य इत्यनैकान्तिकमेतत् । उक्तं च ।

न सोऽस्ति पुरुषो राज्ञा यो न कामयते श्रियम् ।
अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते ॥ २४१ ॥

पिङ्गलक आह । भद्र तथापि मम तस्योपरि चित्तवृत्तिर्न विकृतिं याति । अथवा साध्विदमुच्यते ।

अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ २४२ ॥

दमनक आह । अत एवायं दोषः । उक्तं च ।

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥ २४३ ॥

अपरं केन गुणविशेषेण स्वामी संजीवकं निर्गुणकमपि निकटे धारयति । अथ यद्येवं चिन्तयसि महाकायोऽयमनेन रिपून्व्यापादयिष्यामि तदस्मान्न सिध्यति यतोऽयं शष्पभोजी देवपादानां शत्रवो मांसाशिनः । तद्रिपुसाधनमस्य साहाय्येन न भवति । तस्मादेनं दूषयित्वा हन्यतामिति । पिङ्गलक आह ।

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥ २४४ ॥

अन्यच्च । मयास्य तव वचनेनाभयप्रदानं दत्तम् । तत्कथं स्वयमेव व्यापादयामि । सर्वथा संजीवकोऽयं सुहृदस्माकं न तं प्रति कश्चिन्मन्युरिति । उक्तं च ।

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ २४५ ॥

आदौ न वाप्रणयिनां प्रणयो विधेयो
दत्तोऽथवा प्रतिदिनं परिपोषणीयः ।
उत्क्षिप्य यत्क्षिपति तत्प्रकरोति लज्जां
भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥ २४६ ॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ २४७ ॥

तद्द्रोहबुद्धेरपि मयास्य विरुद्धं नाचरणीयम् । दमनक आह । स्वामिन्नैष धर्मो यद्द्रोहबुद्धेरपि क्षम्यते । उक्तं च ।

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ २४८ ॥

अपरं त्वयास्य सखित्वात्सर्वोऽपि राजधर्मः परित्यक्तो राजधर्माभावात्सर्वोऽपि परिजनो विरक्तिं गतो यतः संजीवकः शष्पभोजी भवान्मांसादस्तव प्रकृतयश्च । यत्तवावध्यव्यवसायबाह्यं कुतस्तासां मांसाशनम् । यद्रहितास्तास्त्वां त्यक्त्वा यास्यन्ति । ततोऽपि त्वं विनष्ट एव । अस्य संगत्या पुनस्ते न कदाचिदाखेटके मतिर्भविष्यति । उक्तं च ।

यादृशैः सेव्यते मर्त्यो यादृशांश्चैव सेवते ।
कदाचिन्नात्र संदेहस्तादृग्भवति पूरुषः ॥ २४९ ॥

तथा च ।

संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥ २५० ॥

तथा च ।

असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥ २५१ ॥

अत एव सन्तो नीचसङ्गं वर्जयन्ति । उक्तं च ।

न ह्यविज्ञातशीलस्य प्रदातव्यः परिश्रयः ।
मत्कुणस्य च दोषेण हता मन्दविसर्पिणी ॥ २५२ ॥

पिङ्गलक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा ९.

अस्ति कस्यचिन्महीपतेर्मनोरमं शयनस्थानम् । तत्र श्वेततर-

र्युगलमध्यसंस्थिता मन्दविसर्पिणी यूका प्रतिवसति स्म । सा च तस्य महीपते रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति। अन्येद्युश्च तत्र शयने क्वचिद्भ्राम्यन्नग्निमुखो नाम मत्कुणः समायातः। अथ तं दृष्ट्वा सा विषण्णवदना प्रोवाच । भो अग्निमुख कुतस्त्वमत्रानुचितस्थाने समायातः । तद्यावन्न कश्चिद्वेत्ति तावच्छीघ्रं गम्यतामिति । स आह । भगवति गृहागतस्यासाधोरपि नैतद्युज्यते वक्तुम् । उक्तं च ।

एह्यागच्छ समाश्वसासनमिदं कस्माच्चिराद्दृश्यसे
का वार्त्ता अतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात् ।
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्तैर्लघुः स्वर्गदः ॥ २५३ ॥

अपरं मयानेकमानुषाणामनेकविधानि रुधिराण्यास्वादितान्याहारदोषात्कटुतिक्तकषायाम्लरसास्वादानि न च कदाचिन्मधुररक्तं समास्वादितम् । तद्यदि त्वं प्रसादं करोषि तदस्य नृपतेर्विविधव्यञ्जनान्नपानचोष्यलेह्यस्वाद्वाहारवशादस्य शरीरे यन्मिष्टं रक्तं संजातं तदास्वादनेन सौख्यं संपादयामि जिह्वाया इति । उक्तं च ।

रङ्कस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम् ।
तन्मात्रं च स्मृतं सारं तदर्थं यतते जनः ॥ २५४ ॥
यद्येव न भवेल्लोके कर्म जिह्वाप्रतुष्टिदम् ।
तन्न भृत्यो भवेत्कश्चित्कस्यचिद्वशगोऽथवा ॥ २५५ ॥
यदसत्यं वदेन्मर्त्यो यद्वासेव्यं च सेवते ।
यद्गच्छति विदेशं च तत्सर्वमुदरार्थतः ॥ २५६ ॥

तन्मया गृहागतेन बुभुक्षया पीड्यमानेनापि त्वत्सकाशाद्भोजनं लभ्यम् । तन्न त्वयैकाकिन्यास्य भूपते रक्तभोजनं कर्तुं युज्यते। तच्छ्रुत्वा मन्दविसर्पिण्याह । भो मत्कुण अस्य नृपतेर्निद्रावशं गतस्याहं रक्तमास्वादयामि पुनस्त्वमग्निमुखश्चपलश्च । तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ । अभीष्टतररक्तमास्वादय । सोऽब्रवीत्। भगवति एवं करिष्यामि । यावत्त्वं नास्वादयसि प्रथमं नृपरक्तं तावन्मम देवगुरुकृतः शपथः स्याद्यदि तदास्वादयामि । एवं तयोः पर-

स्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः । अथासौ मत्कुणो जिह्वालौल्योत्कृष्टौत्सुक्याज्जाग्रतमपि तं महीपतिमदशत् । अथवा साध्विदमुच्यते ।

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ २५७ ॥
यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः ।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥ २५८ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः । अहो ज्ञायतामत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति येनाहं दष्ट इति । अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षांचक्रुः । अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तं प्रविष्टः सा मन्दविसर्पिण्यपि वस्त्रसंध्यन्तर्गता तैर्दृष्टा व्यापादिता च ॥

अतोऽहं ब्रवीमि न ह्यविज्ञातशीलस्येति ।

एवं ज्ञात्वा त्वयैष वध्यः । नो चेत्त्वां व्यापादयिष्यति । उक्तं च

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः ।
स एव मृत्युमाप्नोति यथा राजा ककुद्रुमः ॥ २५९ ॥

पिङ्गलक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा १०.

अस्ति कस्मिंश्चिद्वनोद्देशे चण्डरवो नाम शृगालः । स कदाचित्क्षुधाविष्टो जिह्वालौल्यान्नगरमध्ये प्रविष्टः । अथ तं सारमेया विलोक्य सर्वतः शब्दायमानाः परिधाव्य तीव्रदन्तैर्भक्षयितुमारब्धाः । सोऽपि तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नरजकगृहं प्रविष्टः । तत्र नीलीरसपरिपूर्णं महाभाण्डमासीत् । तत्र सारमेयैराक्रान्तो भाण्डमध्ये पतितः । अथ यावन्निष्क्रान्तस्तावन्नीलीवर्णः संजातः । तत्रापरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टदिशं जग्मुः । चण्डरवोऽपि दूरतरं प्रदेश-

मासाद्य काननाभिमुखं प्रतस्थे न च नीलवर्णेन कदाचिन्निजरङ्गस्त्यज्यते । उक्तं च ।

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोर्यथा ॥ २६० ॥

अथ तं हरगलगरलतमालसमप्रभमपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयोऽरण्यनिवासिनो भयव्याकुलितचित्ताः समन्तात्पलायनक्रियां कुर्वन्ति कथयन्ति च । न ज्ञायतेऽस्य कीदृग्विचेष्टितं पौरुषं च । तद्दूरतरं गच्छामः । उक्तं च ।

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् ।
न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः ॥ २६१ ॥

चण्डरवोऽपि भयव्याकुलितान्विज्ञायेदमाह । भो भोः श्वापदाः किं यूयं मां दृष्ट्वैव संत्रस्ता व्रजथ । तन्न भेतव्यम् । अहं ब्रह्मणाद्य स्वयमेव सृष्ट्वाभिहितः । यच्छ्वापदानां कश्चिद्राजा नास्ति तत्त्वं मयाद्य सर्वश्वापदप्रभुत्वेऽभिषिक्तस्ततो गत्वा तान्सर्वान्परिपालयेति । ततोऽहमत्रागतः । तन्मम च्छत्रच्छायायां सर्वैरपि श्वापदैर्वर्तितव्यम् । अहं ककुद्द्रुमो नाम राजा त्रैलोक्येऽपि संजातः। तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः स्वामिन्प्रभो समादिशेति वदन्तस्तं परिवव्रुः । अथ तेन सिंहस्यामात्यपदवी प्रदत्ता व्याघ्रस्य शय्यापालकत्वं द्वीपिनस्ताम्बूलाधिकारो वृकस्य द्वारपालकत्वम् । ये चात्मीयाः शृगालास्तैः सहालापमात्रमपि न करोति । शृगालाः सर्वेऽपि निःसारिताः । एवं तस्य राज्यक्रियया वर्तमानस्य सिंहादयो मृगान्व्यापाद्य तत्पुरतः प्रक्षिपन्ति । सोऽपि प्रभुधर्मेण सर्वेषां तान्प्रविभज्य प्रयच्छति । एवं गच्छति काले कदाचिद्दूरदेशे शब्दायमानाः शृगाला आकर्णिताः । तेषां शब्दं श्रुत्वा पुलकिततनुरानन्दाश्रुपूर्णनयनस्तारस्वरेण विरोतुमारब्धः । अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य शृगालोऽयमिति मत्वा लज्जयाधोमुखाः क्षणं स्थित्वा प्रोचुः । भो वाहिता अनेन वयम् । क्षुद्रशृगालोऽयम् । तद्वध्यतामिति । सोऽपि तदाकर्ण्य पलायितुमिच्छंस्तत्र स्थान एव सिंहादिभिः खण्डशः कृतो मृतश्च ॥

अतोऽहं ब्रवीमि त्यक्ताश्चाभ्यन्तरा येनेति ।

तदाकर्ण्य पिङ्गलक आह । भो दमनक कः प्रत्ययोऽत्र विषये यतः स ममोपरि दुष्टबुद्धिः । स आह । यदद्य ममाग्रे तेन निश्चयः कृतो यत्प्रभाते पिङ्गलकं वधिष्यामि तदत्रैव प्रत्ययः । प्रभातेऽवसरवेलायामारक्तनयनः स्फुरिताधरो दिशोऽवलोकयन्ननुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्यावलोकयिष्यति । तदेवं ज्ञात्वा यदुचितं तत्कर्तव्यमिति कथयित्वा संजीवकसकाशं गतः । तं प्रणम्योपविष्टः । संजीवकोऽपि सोद्वेगाकारं मन्दगत्या समायान्तं तमुद्वीक्ष्य सादरतरमुवाच । भो मित्र स्वागतम् । चिराद्दृष्टोऽसि । अपि शिवं भवतः । तत्कथय येनादेयमपि तुभ्यं गृहायाताय प्रयच्छामि । उक्तं च ।

ते धन्यास्ते विवेकज्ञास्ते शस्या इह भूतले ।
आगच्छन्ति गृहे येषां कार्यार्थे सुहृदो जनाः ॥ २६२ ॥

दमनक आह । भोः कथं शिवं सेवकजनस्य ।

संपत्तयः परायत्ताः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥ २६३ ॥

तथा च ।

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २६४ ॥
तावज्जन्मातिदुःखाय ततो दुर्गतता सदा ।
तत्रापि सेवया वृत्तिरहो दुःखपरंपरा ॥ २६५ ॥
जीवन्तोऽपि मृताः पञ्च श्रूयन्ते किल भारते ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ २६६ ॥
नाश्नाति सेवयौत्सुक्याद्विनिद्रो न प्रबुध्यते ॥
न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ २६७ ॥
सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितम् ।
स्वच्छन्दं चरति श्वात्र सेवकः परशासनात् ॥ २६८ ॥
भूशय्या ब्रह्मचर्यं च कृशत्वं लघु भोजनम् ।
सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥ २६९ ॥

शीतातपादिकष्टानि सहते यानि सेवकः ।
धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते ॥ २७० ॥
मृदुनातिसुवृत्तेन सुमृष्टेनातिहारिणा ।
मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥ २७१ ॥

संजीवक आह । अथ भवान्किं वक्तुमनाः । स आह । मित्र स्वामिनां सचिवानां मन्त्रभेदं कर्तुं न युज्यते । उक्तं च ।

यो मन्त्रं स्वामिनो भिन्द्यात्साचिव्ये संनियोजितः ।
स हत्वा नृपकार्यं तत्स्वयं च नरकं व्रजेत् ॥ २७२ ॥
येन यस्य कृतो भेदः सचिवेन महीपतेः ।
तेनाशस्त्रवधस्तस्य कृत इत्याह नारदः ॥ २७३ ॥

तथापि मया तव स्नेहपाशबद्धेन मन्त्रभेदः कार्यो यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टश्च । उक्तं च ।

विश्रम्भाद्यस्य यो मृत्युमवाप्नोति कथंचन ।
तस्य हत्या तदुत्था सा प्राहेदं वचनं मनुः ॥ २७४ ॥

तत्तवोपरि पिङ्गलकोऽयं दुष्टबुद्धिः कथितं चाद्यानेन मत्पुरतश्चतुष्कर्णतया यत्प्रभाते संजीवकं हत्वा समस्तमृगपरिवारं चिरात्तृप्तिं नेष्यामि । ततः स मयोक्तः । स्वामिन् अयुक्तमिदं यन्मित्रद्रोहेण संजीवनं क्रियते । उक्तं च ।

अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति ।
तदर्हेण विचीर्णेन न कथंचित्सुहृद्द्रुहः ॥ २७५ ॥

ततस्तेनाहं सामर्षेणोक्तः । भो दुष्टबुद्धे संजीवकस्तावच्छष्पभोजी वयं मांसाशिनस्तदस्माकं स्वाभाविकं वैरमिति । कथं रिपुरुपेक्ष्यते । तस्मात्सामादिभिरुपायैर्हन्यते । न च हते तस्मिन्दोषः स्यात् । उक्तं च ।

दत्त्वापि कन्यकां वैरी निहन्तव्यो विपश्चिता ।
अन्योपायैरशक्यो यो हते दोषो न विद्यते ॥ २७६ ॥

कृत्याकृत्यं न मन्येत क्षत्रियो युद्धिसंयुतः ।
सुप्तो वा द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः ॥ २७७ ॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमुपागतः । सांप्रतं मे नास्ति विश्वासघातकदोषः । तद्यत्ते प्रतिभाति तत्कुरुष्वेति । अथ संजीवकस्तद्वज्रपातदारुणं वचनं श्रुत्वा मोहमुपागतः । अथ चेतनां लब्ध्वा सवैराग्यमिदमाह । भोः साध्विदमुच्यते ।

दुर्जनगम्या नार्यः प्रायेणास्नेहवान्भवति राजा ।
कृपणानुसारि च धनं मेघो गिरिदुर्गवर्षी च ॥ २७८ ॥
अहं हि संमतो राज्ञो य एवं मन्यते कुधीः ।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः ॥ २७९ ॥
वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् ।
वरं व्याधिर्मनुष्याणां नाधिकारेण संपदः ॥ २८० ॥

तदयुक्तं मया कृतं यदनेन सह मैत्री विहिता । उक्तं च ।

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ २८१ ॥

तथा च ।

मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरङ्गैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम् ॥ २८२ ॥

तद्यदि गत्वा तं प्रसादयामि तथापि न प्रसादं यास्यति । उक्तं च ।

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषपरो हि यो भवे-
त्कथं नरोसौ परितोषमेष्यति ॥ २८३ ॥

अहो साधु चेदमुच्यते ।

भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि ।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ २८४ ॥

तथा च ।

भावस्निग्धैरुपकृतमपि द्वेष्यतां याति किंचि-
च्छाठ्यादन्यैरपकृतमपि प्रीतये चोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २८५ ॥

तत्परिज्ञातं मया यत्प्रसादमसहमानैः समीपवर्तिभिरेष पिङ्गलकः प्रकोपितः । तेनायं ममादोषस्याप्येवं वदति । उक्तं च ।

प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः ।
सपत्न्य इव संक्रुद्धाः सपत्न्याः स्वाकृतेरपि ॥ २८६ ॥

भवति चैवं यद्गुणवता समीपवर्तिना तद्गुणैरन्येषां प्रसादो न भवति । उक्तं च

गुणवत्तरपात्रेण च्छाद्यन्ते गुणिनां गुणाः ।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति ॥ २८७ ॥

दमनक आह । भो मित्र यद्येवं तन्नास्ति ते भयम् । प्रकोपितोऽपि स दुर्जनैस्तव वचनेन प्रसादं यास्यति । संजीवक आह । भो न युक्तमुक्तं भवता । लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते उपायान्तरं विधाय ते नूनं घ्नन्ति । उक्तं च ।

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः ।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा ॥ २८८ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

# कथा ११.

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म । तस्य चानुचरा अन्ये द्वीपिवायसगोमायवः सन्ति । अथ कदाचित्तैरितस्ततो भ्रमद्भिः कथनको नामोष्ट्रो दृष्टः । अथ सिंह आह । अहो अपूर्वमिदं सत्त्वम् । तज्ज्ञायतां किमेतदारण्यकं ग्राम्यं वेति । तच्छ्रुत्वा वायस आह । भोः स्वामिन्ग्राम्योऽयमुष्ट्रनामा जीवविशेष-

स्तव भोज्यः। तद्व्यापाद्यताम्। सिंह आह। नाहं गृहमागतं हन्मि। उक्तं च।

गृहं शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम्।
यो हन्यात्तस्य पापं स्याच्छतब्राह्मणघातजम्॥ २८९॥

तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां येनास्यागमकारणं पृच्छामि। अथासौ सर्वैरपि विश्वास्याभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः प्रणम्योपविष्टश्च। ततस्तस्य पृच्छतस्तेनात्मवृत्तान्तः सार्थभ्रंशसमुद्भवो निवेदितः। ततः सिंहेनोक्तम्। भोः कथनक मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहनकष्टभागी भूयाः। तदत्रारण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन्मया सह सदैव वस। सोऽपि तथेत्युक्त्वा तेषां मध्ये विचरन्न कुतोऽपि भयमिति सुखेनास्ते। तथाऽन्येद्युर्मदोत्कटस्य महागजेनारण्यचारिणा सह युद्धमभवत्। ततस्तस्य दन्तमुसलप्रहारैर्व्यथा संजाता। व्यथितः कथमपि प्राणैर्न वियुक्तः। अथ शरीरासामर्थ्यान्न कुत्रचित्पदमपि चलितुं शक्नोति। ते सर्वे काकादयोऽप्यप्रभुत्वेन क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान्सिंहः प्राह। भो अन्विष्यतां कुत्रचित्किंचित्सत्त्वं येनाहमेतामपि दशां प्राप्तस्तद्धत्वा युष्मद्भोजनं संपादयामि। अथ ते चत्वारोऽपि भ्रमितुमारब्धा यावन्न किंचित्सत्त्वं पश्यन्ति तावद्वायसशृगालौ परस्परं मन्त्रयतः। शृगाल आह। भो वायस किं प्रभूतभ्रान्तेन। अयमस्माकं प्रभोः कथनको विश्वस्तस्तिष्ठति। तदेनं हत्वा प्राणयात्रां कुर्मः। वायस आह। युक्तमुक्तं भवता परं स्वामिना तस्याभयप्रदानं दत्तमास्ते न वध्योऽयमिति। शृगाल आह। भो वायस अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी वधं करिष्यति। तत्तिष्ठन्तु भवन्तोऽत्रैव यावदहं गृहं गत्वा प्रभोराज्ञां गृहीत्वा चागच्छामि। एवमभिधाय सत्वरं सिंहमुपस्थितः। अथ सिंहमासाद्येदमाह। स्वामिन्समस्तं वनं भ्रान्त्वा वयमागताः। न किंचित्सत्त्वमासादितम्। तत्किं कुर्मो वयम्। संप्रति वयं बुभुक्षया पदमपि चलितुं न शक्नुमः। देवोऽपि पथ्याशी वर्तते। तद्यदि देवादेशो भवति तत्कथनकपिशितेनाद्य पथ्यक्रिया क्रियते। अथ सिंहस्तस्य तद्दारुणं वचनमा-

कर्ण्य सकोपमिदमाह। धिक्पापाधम यद्येवं भूयोऽपि वदसि ततस्त्वां तत्क्षणेन वधिष्यामि यतो मया तस्याभयं दत्तम्। तत्कथं व्यापादयामि। उक्तं च।

न गोप्रदानं न महीप्रदानं
न चान्नदानं हि तथा प्रदानम्।
यथा वदन्तीह बुधाः प्रधानं
सर्वप्रदानेष्वभयप्रदानम् ॥ २९० ॥

तच्छ्रुत्वा शृगाल आह। स्वामिन्यद्यभयप्रदानं दत्त्वा वधः क्रियते तदेष दोषो भवति। पुनर्यदि देवपादानां भक्त्या स आत्मनो जीवितव्यं प्रयच्छति तन्न दोषः। ततो यदि स स्वयमेवात्मानं वधाय नियोजयति तद्वध्योऽन्यथास्माकं मध्यादेकतमो वध्य इति यतो देवपादाः पथ्याशिनः क्षुन्निरोधादन्त्यां दशां यास्यन्ति। तत्किमेतैः प्राणैरस्माकं ये स्वाम्यर्थे न यास्यन्ति। अपरं पश्चादप्यस्माभिर्वह्निप्रवेशः कार्यो यदि स्वामिपादानां किंचिदनिष्टं भविष्यति। उक्तं च।

यस्मिन्कुले यः पुरुषः प्रधानः
स सर्वयत्नैः परिरक्षणीयः।
तस्मिन्विनष्टे स्वकुलं विनष्टं
न नाभिभङ्गे ह्यरका वहन्ति ॥ २९१ ॥

तदाकर्ण्य मदोत्कट आह। यद्येवं तत्कुरुष्व यद्रोचते। तच्छ्रुत्वा स सत्वरं गत्वा तानाह। भोः स्वामिनो महत्यवस्था वर्तते तत्किं पर्यटितेन। तेन विना कोऽत्रास्मान्रक्षयिष्यति। तद्गत्वा तस्य क्षुद्रोगात्परलोकं प्रस्थितस्यात्मशरीरदानं कुर्मो येन स्वामिप्रसादस्यानृणतां गच्छामः। उक्तं च।

आपदं प्राप्नुयात्स्वामी यस्य भृत्यस्य जीवतः।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत् ॥ २९२ ॥

इति श्रुत्वा ते सर्वे बाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान्दृष्ट्वा मदोत्कट आह। भोः प्राप्तं दृष्टं वा किंचित्सत्त्वम्। अथ तेषां मध्यात्काकः प्रोवाच। स्वामिन्वयं तावत्सर्वत्र पर्यटिताः परं न

किंचित्सत्त्वमासादितं दृष्टं वा । तदद्य मां भक्षयित्वा प्राणान्धारयतु स्वामी येन देवस्याप्यायना भवति मम पुनः स्वर्गप्राप्तिरिति । उक्तं च ।

स्वाम्यर्थे यस्त्यजेत्प्राणान्भृत्यो भक्तिसमन्वितः ।
स परं पदमाप्नोति जरामरणवर्जितम् ॥ २९३ ॥

तच्छ्रुत्वा शृगाल आह । भोः स्वल्पकायो भवान् । भवद्भक्षणात्स्वामिनस्तावत्प्राणयात्रा न भवत्यपरो दोषश्च तावत्समुत्पद्यते । उक्तं च ।

काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्बलम् ।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते ॥ २९४ ॥

तद्दर्शिता स्वामिभक्तिर्भवता गतं चानृण्यं भर्तृपिण्डस्य प्राप्तश्चोभयलोके साधुवादः । तदपसराग्रतः । अहं स्वामिनं विज्ञापयामि । तथानुष्ठिते शृगालः सादरं प्रणम्योपविष्टः । स्वामिन्मां भक्षयित्वाद्य प्राणयात्रां विधाय ममोभयलोकप्राप्तिं कुरु । उक्तं च ।

स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः ।
यतस्ततो न दोषोऽस्ति तेषां ग्रहणसंभवः ॥ २९५ ॥

अथ तच्छ्रुत्वा द्वीप्याह । भोः साधूक्तं भवता पुनर्भवानपि स्वल्पकायः स्वजातिश्च नखायुधत्वादभक्ष्य एव । उक्तं च ।

नाभक्ष्यं भक्षयेत्प्राज्ञः प्राणैः कण्ठगतैरपि ।
विशेषात्तदपि स्तोकं लोकद्वयविनाशकम् ॥ २९६ ॥

तद्दर्शितं त्वयात्मनः कौलीन्यम् । अथवा साधु चेदमुच्यते ।

एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् ।
आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम् ॥ २९७ ॥

तदपसराग्रतो येनाहं स्वामिनं विज्ञापयामि । तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह । स्वामिन्क्रियतामद्य मम प्राणैः प्राणयात्रा दीयतामक्षयो वासः स्वर्गे मम विस्तार्यतां क्षितितले प्रभूतं यश इति तन्नात्र विस्मयः कार्यः । उक्तं च ।

मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् ।
भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ २९८ ॥

तच्छ्रुत्वा कथनकश्चिन्तयामास । एतैस्तावत्सर्वैरपि शोभावाक्यान्युक्तानि न चैकोऽपि स्वामिना विनाशितः । तदहमपि प्राप्तकालं वक्ष्यामि चित्रकं येन मद्वचनमेते त्रयोऽपि समर्थयन्ति । इति निश्चित्य प्रोवाच । भोः सत्यमुक्तं भवता परं भवानपि नखायुधः । तत्कथं भवन्तं स्वामी भक्षयति । उक्तं च ।

मनसापि स्वजात्यानां योऽनिष्टानि प्रचिन्तयेत् ।
भवन्ति तस्य तान्येव इह लोके परत्र च ॥ २९९ ॥

तदपसराग्रतो येनाहं स्वामिनं विज्ञापयामि तथानुष्ठिते कथनकोऽग्रे स्थित्वा प्रणम्योवाच । स्वामिन् एतेऽभक्ष्यास्तव तन्मम प्राणैः प्राणयात्रा विधीयतां येन ममोभयलोकप्राप्तिर्भवति । उक्तं च ।

न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः ।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥ ३०० ॥

एवमभिहिते ताभ्यां शृगालचित्रकाभ्यां विदारितोऽभयकुक्षिः कथनकः प्राणानत्याक्षीत् । ततश्च तैः क्षुद्रपण्डितैः सर्वैर्भक्षितः ॥

अतोऽहं ब्रवीमि बहवः पण्डिताः क्षुद्रा इति ।

तद्भद्र क्षुद्रपरिवारोऽयं राजा मया संपरिकल्पितः । उक्तं च ।

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते ।
यथा गृध्रसमासन्नः कलहंसः समाचरेत् ॥ ३०१ ॥

तथा च ।

गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः सभासदैः ।
हंसाकारोऽपि संत्याज्यो गृध्राकारैः स तैर्नृपः ॥ ३०२ ॥

तन्नूनं ममोपरि केनचिद्दुर्जनेनायं प्रकोपितः । तेनैवं वदति । अथवा भवत्येतत् । उक्तं च ।

कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ।
क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन ॥ ३०३ ॥

अथवा साध्विदमुच्यते ।

पादाहतोऽपि दृढदण्डसमाहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।

कोऽप्येष एव पिशुनोग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥ ३०४ ॥

तथा च ।

अहो खलभुजङ्गस्य विपरीतो वधक्रमः ।
कर्णे लगति चान्यस्य प्राणैरन्यो वियुज्यते ॥ ३०५ ॥

तदेवं गतेऽपि किं कर्तव्यमिति । अहं त्वां सुहृद्भावात्पृच्छामि ॥ दमनक आह । तद्देशान्तरगमनं युज्यते नैवंविधस्य कुस्वामिनः सेवां विधातुम् । उक्तं च ।

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ३०६ ॥

संजीवक आह । अस्त्येतत्परं स्वामिनि कुपिते गन्तुं न शक्यते न चान्यत्र गतानामपि निर्वृतिर्भवति । उक्तं च ।

महतां योऽपराध्येत दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू स ताभ्यां हन्ति हिंसितः ॥ ३०७ ॥

तद्युद्धं मुक्त्वा मे नास्त्यन्यच्छ्रेयस्करम् । उक्तं च ।

न तान्सुतीर्थैस्तपसा च लोका-
न्स्वर्गैषिणो दानशतैः सुवित्तैः ।
क्षणेन यान्यान्ति रणेषु धीराः
प्राणान्समुज्झन्ति हि ये सुशीलाः ॥ ३०८ ॥

मृतैः संप्राप्यते स्वर्गो जीवद्भिः कीर्तिरुत्तमा ।
तदुभावपि शूराणां गुणावेतौ न दुर्लभौ ॥ ३०९ ॥

तथा च ।

होमार्थैर्विविधप्रदानविधिना सद्विप्रवृन्दार्चनै-
र्यज्ञैर्भूरिसुदक्षिणैः सुविहितैः संप्राप्यते यत्फलम् ।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुंभिस्तत्फलमाहवे विनिहतैः संप्राप्यते तत्क्षणात् ॥ ३१० ॥

तदाकर्ण्य दमनकश्चिन्तयामास । तद्युद्धाय कृतनिश्चयोऽयं दृश्यते दुरात्मा । तद्यदि कदाचित्तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति तन्म-

हाननर्थः संपत्स्यते । तदेनं भूयोऽपि स्वबुद्ध्या प्रबोध्य तथा करोमि यथा देशान्तरगमनं करोति । आह च । भो मित्र सम्यगभिहितं भवता परं किंतु कः स्वामिभृत्ययोः संग्रामः । उक्तं च ।

बलवन्तं रिपुं दृष्ट्वा किलात्मानं प्रगोपयेत् ।
बलवद्भिश्च कर्तव्या शरच्चन्द्रप्रकाशता ॥ ३११ ॥

अन्यच्च ।

शत्रोर्बलमविज्ञाय वैरमारभते तु यः ।
स पराभवमाप्नोति समुद्रष्टिट्टिभादिव ॥ ३१२ ॥

संजीवक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा १२.

कस्मिंश्चित्समुद्रैकदेशे टिट्टिभदंपती वसतः । ततो गच्छति काल ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त । आसन्नप्रसवा सती टिट्टिभमूचे । भोः कान्त मम प्रसवसमयो वर्तते तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानं येन तत्राहमण्डकमोक्षणं करोमि । टिट्टिभ आह । भद्रे रम्योऽयं समुद्रप्रदेशः । तदत्रैव प्रसवः कार्यः । सा प्राह । अत्र पूर्णिमादिने समुद्रवेला चटति । सा मत्तगजेन्द्रानप्याकर्षति । तद्दूरमन्यत्र किंचित्स्थानमन्विष्यताम् । तच्छ्रुत्वा विहस्य टिट्टिभ आह । भद्रे न युक्तमुक्तं भवत्या । का मात्रा समुद्रस्य यो मम दूषयिष्यति प्रसूतिम् । तद्विश्रब्धात्रैव गर्भं मुञ्च । उक्तं च ।

यः पराभवसंप्राप्तः स्वस्थानं संत्यजेन्नरः ।
तेन चेत्पुत्रिणी माता तद्वन्ध्या केन कथ्यते ॥ ३१३ ॥

तच्छ्रुत्वा समुद्रश्चिन्तयामास । अहो गर्वः पक्षिकीटस्यास्य । अथवा साध्विदमुच्यते ।

उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः ।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते ॥ ३१४ ॥

तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यम् । किं ममैषोऽण्डापहारे

कृते करिष्यति। इति चिन्तयित्वा स्थितः। अथ प्रसवानन्तरं प्राणयात्रार्थं गतायाष्टिट्टिभ्याः समुद्रो वेलाव्याजेनाण्डान्यपजहार। अथायाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे। भो मूर्ख कथितमासीन्मया ते यत्समुद्रवेलयाण्डानां विनाशो भविष्यति तद्दूरतरं व्रजावः परं मूढतयाहंकारमाश्रित्य मम वचनं न करोषि। अथवा साध्विदमुच्यते।

सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ३१५ ॥

टिट्टिभ आह। कथमेतत्। साब्रवीत्।

## कथा १३.

अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य संकटविकटनाम्नी मित्रे हंसजातीये परमस्नेहमाश्रिते। तौ च हंसौ सरस्तीरमासाद्य तेन सहानेकदेवर्षिमहर्षीणां कथाः कृत्वास्तमनवेलायां स्वनीडसंश्रयं कुरुतः। अथ गच्छति कालेऽनावृष्टिवशात्सरः शनैः शनैः शोषमगमत्। ततस्तद्दुःखदुःखितौ तावूचतुः। भो मित्र जम्बालशेषमेतत्सरः संजातं तत्कथं भवान्भविष्यतीति व्याकुलत्वं नौ हृदि वर्तते। तच्छ्रुत्वा कम्बुग्रीव आह। भोः सांप्रतं नास्त्यस्माकं जीवितव्यं जलाभावात्। तथाप्युपायश्चिन्त्यतामिति। उक्तं च।

त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात्कदाचिद्गतिमाप्नुयात्सः।
यथा समुद्रेऽपि च पोतभङ्गे
सांयात्रिको वाञ्छति तर्तुमेव ॥ ३१६ ॥

अपरं च।

मित्रार्थे बान्धवार्थे च बुद्धिमान्यतते सदा।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥ ३१७ ॥

तदानीयतां काचिद्दृढरज्जुर्लघु काष्ठं वान्विष्यतां च प्रभूतजलस-

नार्थं सरो येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोस्तत्काष्ठं मया सहितं संगृह्य तत्सरो नयथः । तावूचतुः । भो मित्र एवं करिष्यावः परं भवता मौनव्रतेन भाव्यं नो चेत्तव काष्ठात्पातो भविष्यति । तथानुष्ठिते गच्छता कम्बुग्रीवेणाधोभागव्यवस्थितं किंचित्पुरमालोकितम् । तत्र ये पौरास्ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः । अहो चक्राकारं किमपि पक्षिभ्यां नीयते । पश्यत पश्यत । अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह । भोः किमेष कोलाहल इति वक्तुमना अर्धोक्ते पतितः पौरैः खण्डशः कृतश्च ।

अतोऽहं ब्रवीमि सुहृदां हितकामानामिति ॥

तथाच ।

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ३१८ ॥

टिट्टिभ आह । कथमेतत् । साब्रवीत् ।

## कथा १४.

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति । अथ कदाचित्तं जलाशयं दृष्ट्वागच्छद्भिर्मत्स्यजीविभिरुक्तं यदहो बहुमत्स्योऽयं ह्रदः कदाचिदपि नास्माभिरन्वेषितः । तदद्याहारवृत्तिः संजाता संध्यासमयश्च संभूतस्ततः प्रभातेऽत्रागन्तव्यमिति निश्चयः । अतस्तेषां तत्कुलिशपातोपमं वचः समाकर्ण्यानागतविधाता सर्वान्मत्स्यानाहूयेदमूचे । अहो श्रुतं भवद्भिर्यन्मत्स्यजीविभिरभिहितम् । तद्रात्रावपि किंचिद्गम्यतां समीपवर्ति सरः । उक्तं च ।

अशक्तैर्बलिनः शत्रोः कर्तव्यं प्रपलायनम् ।
संश्रितव्योऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥ ३१९ ॥

तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसंक्षयं करिष्यन्ति । एतन्मम मनसि वर्तते । तन्न युक्तं सांप्रतं क्षणमप्यत्रावस्थातुम् । उक्तं च ।

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा ।
ते न पश्यन्ति विद्वांसो देशभङ्गं कुलक्षयम् ॥ ३२० ॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह । अहो सत्यमभिहितं भवता । ममाप्यभीष्टमेतत् । तदन्यत्र गम्यतामिति । उक्तं च ।

परदेशभयाद्भीता बहुमाया नपुंसकाः ।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥ ३२१ ॥

यस्यास्ति सर्वत्र गतिः स कस्मा-
त्स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति ॥ ३२२ ॥

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच । अहो न भवद्भ्यां मन्त्रितं सम्यगेतदिति यतः किं वाङ्मात्रेणापि तेषां पितृपैतामहिकमेतत्सरस्त्यक्तुं युज्यते । तद्यद्यायुःक्षयोऽस्ति तदन्यत्र गतानामपि मृत्युर्भविष्यत्येव । उक्तं च ।

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ३२३ ॥

तदहं न यास्यामि । भवद्भ्यां च यत्प्रतिभाति तत्कार्यम् । अथ तस्य तं निश्चयं ज्ञात्वानागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन । अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह जलाशयो निर्मत्स्यतां नीतः । अतोऽहं ब्रवीम्यनागतविधाता चेति ॥ तच्छ्रुत्वा टिट्टिभ आह । भद्रे किं मां यद्भविष्यसदृशं संभावयिष्यसि । तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं शोषयामि । टिट्टिभ्याह । अहो कस्ते समुद्रेण सह विग्रहः । तन्न युक्तमस्योपरि कोपं कर्तुम् । उक्तं च यतः ।

पुंसामसमर्थानामुपद्रवायात्मनो भवेत्कोपः ।
पिठरं क्वथदतिमात्रं निजपार्श्वानेव दहतितराम् ॥ ३२४ ॥

तथा च ।

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ ३२५ ॥

टिट्टिभ आह । प्रिये मा मैवं वद । येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरूनपि विक्रमन्ते । उक्तं च ।

विशेषात्परिपूर्णस्य याति शत्रोरमर्षणः ।
आभिमुख्यं शशाङ्कस्य यथाद्यापि विधुंतुदः ॥ ३२६ ॥

तथा च ।

प्रमाणादधिकस्यापि गण्डश्याममदच्युतेः ।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ ३२७ ॥

तथा च ।

बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ ३२८ ॥

तदनया चञ्च्वास्य सकलं तोयं शुष्कस्थलतां नयामि । टिट्टिभ्याह । भोः कान्त यत्र जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति तथा सिन्धुश्च तत्कथं त्वमष्टादशनदीशतैः पूर्यमाणं तं विप्रुषवाहिन्या चञ्च्वा शोषयिष्यसि । तत्किमश्रद्धेयेनोक्तेन । टिट्टिभ आह । प्रिये ।

अनिर्वेदः श्रियो मूलं चञ्चुर्मे लोहसंनिभा ।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति ॥ ३२९ ॥
दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम् ।
जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥ ३३० ॥

टिट्टिभ्याह । यदि त्वयावश्यं समुद्रेण सह वैरानुष्ठानं कार्यं तदन्यानपि विहगानाहूय सुहृज्जनसहित एवं समाचर । उक्तं च ।

बहूनामप्यसाराणां समवायो हि दुर्जयः ।
तृणैरावेष्ट्यते रज्जुर्यया नागोऽपि बध्यते ॥ ३३१ ॥

तथा च ।

चटकाकाष्ठकूटेन मक्षिकादर्दुरैस्तथा ।
महाजनविरोधेन कुञ्जरः प्रलयं गतः ॥ ३३२ ॥

टिट्टिभ आह । कथमेतत् । सा प्राह ।

## कथा १५.

कस्मिंश्चिद्वनोद्देशे चटकदंपती तमालतरुकृतनिलयौ प्रतिवसतः । अथ गच्छता कालेन संततिरभवत् । अन्यस्मिन्नहनि प्रमत्तो गजः कश्चित्तं तमालवृक्षं घर्मार्तश्छायार्थी समाश्रितः । ततो मदोत्कर्षात्तां तस्य शाखां चटकाक्रान्तां पुष्कराग्रेणाकृष्य बभञ्ज । तस्या भङ्गेन चटकाण्डानि सर्वाणि विशीर्णानि । आयुःशेषतया च चटका कथमपि प्राणैर्न वियुक्ता । अथ साण्डभङ्गाभिभूता प्रलापान्कुर्वाणा न कथंचिदतिष्ठत् । अत्रान्तरे तस्यास्तान्प्रलापाञ्श्रुत्वा काष्ठकूटो नाम पक्षी तस्याः परमसुहृत्तद्दुःखदुःखितोऽभ्येत्य तामुवाच । भवति किं वृथा प्रलापेन । उक्तं च ।

नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः ।
पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ ३३३ ॥

तथा च ।

अशोच्यानीह भूतानि यो मूढस्तानि शोचति ।
स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ३३४ ॥

अन्यच्च ।

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
तस्मान्न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः ॥ ३३५ ॥

चटका प्राह । अस्त्वेतत् । परं दुष्टगजेन मदान्मम संतानक्षयः कृतः । तद्यदि त्वं सुहृत्सत्यस्तदस्य गजापसदस्य कोऽपि वधोपायश्चिन्त्यो यस्यानुष्ठानेन मे संततिनाशदुःखमपसरति । उक्तं च ।

आपदि येनोपकृतं येन च हसितं दशासु चान्यासु ।
उपकृदपकृदपि च तयोर्यस्तं पुरुषं परं मन्ये ॥ ३३६ ॥

काष्ठकूट आह । भवति सत्यमभिहितं भवत्या । उक्तं च ।

स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् ।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ३३७ ॥

तत्पश्य मे बुद्धिप्रभावम् । परं ममापि सुहृद्भूता वीणारवा नाम मक्षिकास्ति । तत्तामाहूयागच्छामि येन स दुरात्मा दुष्टगजो हन्यते । अथासौ सह चटकया मक्षिकामासाद्य प्रोवाच । भद्रे ममेष्टेयं चटका केनचिद्दुष्टगजेन पराभूताण्डस्फोटनेन । तत्तस्य वधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि । मक्षिकाप्याह । भद्र किमुच्यतेऽत्र विषये । उक्तं च ।

पुनःप्रत्युपकाराय मित्राणां क्रियते प्रियम् ।
यत्पुनर्मित्रमित्रस्य कार्यं मित्रैर्न किं कृतम् ॥ ३३८ ॥

सत्यमेतत् । परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति । तमप्याहूय यथोचितं कुर्मः । उक्तं च ।

हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः ।
कथंचिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ३३९ ॥

अथ ते त्रयोऽपि गत्वा मेघनादस्याग्रे पूर्ववृत्तान्तं निवेद्य तस्थुः । अथ स प्रोवाच । कियन्मात्रो गजो वराको महाजनस्य कुपितस्य । तन्मदीयो मन्त्रः कर्तव्यः । मक्षिके त्वं गत्वा मध्याह्नसमये तस्य मदोत्कटस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु येन श्रवणसुखलालसो निमीलितनयनो भवति । ततश्च काष्ठकूटचञ्च्वा स्फोटितनयनोऽन्धीभूतस्तृषार्तो मम गर्ततटाश्रितस्य सपरिकरस्य शब्दं श्रुत्वा जलाशयं मत्वाभ्येति । ततो गर्तमासाद्य पतिष्यति पञ्चत्वं यास्यति चेति । एवं समवायः कर्तव्यो यथा वैरसाधनं भवति । अथ तथानुष्ठिते स मत्तगजो मक्षिकागेयश्रवणसुखान्निमीलितनयनःपश्चात्काष्ठकूटहृतचक्षुर्मध्याह्नसमये भ्राम्यन्मण्डूकशब्दानुसारी गच्छन्महतीं गर्तामासाद्य पतितो मृतश्च ॥ अतोऽहं ब्रवीमि चटकाकाष्ठकूटेनेति ।

टिट्टिभ आह । भद्रे एवं भवतु । सुहृद्वर्गसमुदायेन समुद्रं शोष-

यिष्यामीति निश्चित्य बकसारसमयूरादीन्समाहूय प्रोवाच । भोः पराभूतोऽहं समुद्रेणाण्डकापहारेण तच्चिन्त्यतामस्य शोषणोपायः । ते संमन्त्र्य प्रोचुः । अशक्ता वयं समुद्रशोषणे तत्किं वृथा प्रयासेन । उक्तं च

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः ।
युद्धार्थं स निवर्तेत शीर्णदन्तो गजो यथा ॥ ३४० ॥

तदस्माकं स्वामी वैनतेयोऽस्ति । तत्तस्मै सर्वमेतत्परिभवस्थानं निवेद्यते येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति । अथवात्रावलेपं करिष्यति तथापि नास्ति वो दुःखम् । उक्तं च ।

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखीभवति ॥ ३४१ ॥

तद्यामो वैनतेयसकाशं यतोऽसावस्माकं स्वामी । तथानुष्ठिते सर्वे ते पक्षिणो विवर्णवदना बाष्पपूरितदृशो वैनतेयसकाशमुपेत्य करुणस्वरेण फूत्कर्तुमारब्धाः । अहो अब्रह्मण्यमब्रह्मण्यम् । अधुना सदाचारस्य टिट्टिभस्य भवति नाथे सति समुद्रेणाण्डान्यपहृतानि । तत्प्रनष्टमधुना पक्षिकुलम् । अन्येऽपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते । उक्तं च ।

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् ।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥ ३४२ ॥

तथा च ।

चाटतस्करदुर्वृत्तैस्तथा साहसिकादिभिः ।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥ ३४३ ॥
प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः ।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ ३४४ ॥
प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ ३४५ ॥
राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ ३४६ ॥

फलार्थी पार्थिवो लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ ३४७ ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ ३४८ ॥
हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्नृपस्य तत् ॥ ३४९ ॥

अथैवं गरुडः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत् । सत्यमुक्तमेतैः पक्षिभिः । अहो तदद्य गत्वा तं समुद्रं शोषयामः । एवं चिन्तयतस्तस्य विष्णुदूतः समागत्याह । भो गरुत्मन्भगवता नारायणेनाहं तव पार्श्वे प्रेषितः । देवकार्येण श्रीभगवानमरावत्यां यास्यतीति । तत्सत्वरमागम्यताम् । तच्छ्रुत्वा गरुडः साभिमानं प्राह । भो दूत किं मया कुभृत्येन भगवान्करिष्यति । तद्गत्वा तं वद यदन्यो भृत्यो वाहनायास्मत्स्थाने क्रियताम् । मदीयो नमस्कारो वाच्यो भगवतः । उक्तं च ।

यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः ।
न हि तस्मात्फलं किंचित्सुकृष्टादूषरादिव ॥ ३५० ॥

दूत आह । भो वैनतेय कदाचिदपि भगवन्तं प्रति त्वया नैतदभिहितमीदृक् । तत्कथय किं ते भगवतापमानस्थानं कृतम् । गरुड आह । भगवदाश्रयभूतेन समुद्रेणास्मट्टिट्टिभाण्डान्यपहृतानि । तद्यदि निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः । तद्द्रुततरं गत्वा भवता भगवतः समीपे गन्तव्यम् । अथ दूतमुखेन प्रणयकुपितं वैनतेयं विज्ञाय भगवांश्चिन्तयामास । अहो स्थाने कोपो वैनतेयस्य । तत्स्वयमेव गत्वा संमानपुरःसरं तमानयामि । उक्तं च ।

भक्तं शक्तं कुलीनं च न भृत्यमपमानयेत् ।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रेय आत्मनः ॥ ३५१ ॥

अन्यच्च ।

राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु संमानमात्रेण प्राणैरप्युपकुर्वते ॥ ३५२ ॥

इत्येवं संप्रधार्य रुक्मपुरे वैनतेयसकाशं सत्वरमगमत् । वैनतेयोऽपि गृहागतं भगवन्तमवलोक्य त्रपाधोमुखः प्रणम्योवाच । भगवन् त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्याण्डान्यपहृत्य मेऽपमानस्थानं कृतम् । परं युष्मल्लज्जयाहं तं स्थलतां न नयामीति । यतः स्वामिभयाच्छुनोऽपि प्रहारो न दीयते । उक्तं च ।

येन स्याल्लघुता वाथ पीडा चित्ते प्रभोः क्वचित् ।
प्राणत्यागेऽपि तत्कर्म न कुर्यात्कुलसेवकः ॥ ३५३ ॥

तच्छ्रुत्वा भगवानाह । भो वैनतेय सत्यमभिहितं भवता । उक्तं च ।

भृत्यापराधजो दण्डः स्वामिनो जायते यतः ।
तेन लज्जापि तस्योत्था न भृत्यस्य तथा पुनः ॥ ३५४ ॥

तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं संभावयावोऽमरावतीं च गच्छावः । तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं संधायाभिहितः । भो दुरात्मन्दीयन्तां टिट्टिभाण्डानि नो चेत्स्थलतां त्वां नयामि । ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि टिट्टिभेनापि भार्यायै समर्पितानि ॥

अतोऽहं ब्रवीमि शत्रोर्बलमविज्ञायेति ।

तस्मात्पुरुषेणोद्यमो न त्याज्यः । तदाकर्ण्य संजीवकस्तमेव भूयोऽपि पप्रच्छ । भो मित्र कथं ज्ञेयो मयासौ दुष्टबुद्धिरिति । इयन्तं कालं यावदुत्तरोत्तरस्नेहेन प्रसादेन चाहं दृष्टो न कदाचित्तद्विकृतिर्दृष्टा । तत्कथ्यतां येनाहमात्मरक्षार्थं तद्वधाय च यते । दमनक आह । भद्र किमत्र ज्ञेयम् । एष ते प्रत्ययः । यदि रक्तनेत्रस्त्रिशिखां भ्रूकुटिं दधानः सृक्किणी परिलेलिहत्त्वां दृष्ट्वा भवति तद्दुष्टबुद्धिरन्यथा सुप्रसादश्चेति । तदाज्ञापय माम् । स्वाश्रयं प्रति गच्छामि । त्वया च यथायं मन्त्रभेदो न भवति तथा कार्यम् । यदि निशामुखं प्राप्य गन्तुं शक्नोषि तद्देशत्यागः कार्यः । यतः ।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ३५५ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३५६ ॥

बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशो वा नीतिः । तद्देशत्यागः कार्यः । अथवात्मा सामादिभिरुपायैरभिरक्षणीयः । उक्तं च ।

अपि पुत्रकलत्रैर्वा प्राणान्रक्षेत पण्डितः ।
विद्यमानैर्यतस्तैः स्यात्सर्वं भूयोऽपि देहिनाम् ॥ ३५७ ॥

तथा च ।

येन केनाप्युपायेन शुभेनाप्यशुभेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ३५८ ॥
यो मायां कुरुते मूढः प्राणत्यागे धनादिके ।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत् ॥ ३५९ ॥

एवमभिधाय दमनकः करटकसकाशमगमत् । करटकोऽपि तमायान्तं दृष्ट्वा प्रोवाच । भद्र किं कृतं तत्र भवता । दमनक आह । मया तावन्नीतिबीजनिर्वापणं कृतं परतो दैवविहितायत्तम् । उक्तं च यतः ।

पराङ्मुखेऽपि दैवेऽत्र कृत्यं कार्यं विपश्चिता ।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च ॥ ३६० ॥

तथा च ।

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ३६१ ॥

करटक आह । तत्कथय कीदृक्त्वया नीतिबीजं निर्वापितम् । सोऽब्रवीत् । मयान्योन्यं ताभ्यां मिथ्याप्रजल्पनेन भेदस्तथा विहितो

यथा भूयोऽपि मन्त्रयन्तावेकस्थानस्थितौ न पश्यसि। करटक आह। अहो न युक्तं भवता विहितं यत्परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ कोपसागरे प्रक्षिप्तौ। उक्तं च।

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत्।
जन्मजन्मान्तरे दुःखी स नरः स्यादसंशयम् ॥ ३६२ ॥

अपरं त्वं यद्भेदमात्रेणापि तुष्टस्तदप्ययुक्तं यतः सर्वोऽपि जनो विरूपकरणे समर्थो भवति नोपकर्तुम्। उक्तं च।

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम्।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ३६३ ॥

दमनक आह। अनभिज्ञो भवान्नीतिशास्त्रस्य तेनैतद्ब्रवीषि। उक्तं च यतः।

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ ३६४ ॥

तच्छत्रुभूतोऽयमस्माकं मन्त्रिपदापहरणात्। उक्तं च।

पितृपैतामहं स्थानं यो यस्यात्र जिगीषते।
स तस्य सहजः शत्रुरुच्छेद्योऽपि प्रिये स्थितः ॥ ३६५ ॥

तन्मया स उदासीनतया समानीतोऽभयप्रदानेन यावत्तावदहमपि तेन साचिव्यात्प्रच्यावितः। अथवा साध्विदमुच्यते।

दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः।
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ ३६६ ॥

तेन मया तस्योपरि वधोपाय एष विरच्यते। देशत्यागाय वा भविष्यति। तच्च त्वां मुक्त्वान्यो न ज्ञास्यति। तद्युक्तमेतत्स्वार्थायानुष्ठितम्। उक्तं च यतः।

निस्त्रिंशं हृदयं कृत्वा वाणीं चेक्षुरसोपमाम्।
दुःखं तत्र न कर्तव्यं हन्यात्तत्रापकारिणम् ॥ ३६७ ॥

अपरं मृतोऽप्यस्माकं भोज्यो भविष्यति । तदेकं तावद्वैरसाधनम्। अपरं साचिव्यं च भविष्यति तृप्तिश्चेति। तद्गुणत्रयेऽस्मिन्नुपस्थिते कस्मान्मां दूषयसि त्वं जाड्यभावात्। उक्तं च ।

परस्य पीडनं कुर्वन्स्वार्थसिद्धिं च पण्डितः ।
मूढबुद्धिर्न भक्षेत वने चतुरको यथा ॥ ३६८ ॥

करटक आह । कथमेतत्। स आह ।

## कथा १६.

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः । तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ सदानुगतौ तत्रैव प्रतिवसतः। अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा प्रसववेदनया स्वयूथाद्भ्रष्टोष्ट्र्युपविष्टा कस्मिंश्चिद्वनोद्देशे समासादिता। अथ तां व्यापाद्य यावदुदरं स्फाटयति तावज्जीवँल्लघुदासेरकशिशुर्निष्क्रान्तः। सिंहोऽपि दासेरक्याः पिशितेन सपरिवारः परां तृप्तिमुपागतः परं स्नेहात्स दासेरकं गृहमानीयेदमुवाच । भद्र न तेऽस्ति मृत्योर्भयं मत्तो नान्यस्मादपि। ततः स्वेच्छयात्र वने भ्रम्यतामिति। यतस्ते शङ्कुसदृशौ कर्णावतः शङ्कुकर्णो नाम भविष्यसि । एवमनुष्ठिते चत्वारोऽपि त एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति। शङ्कुकर्णोऽपि यौवनपदवीमारूढः क्षणमपि न तं सिंहं मुञ्चति। अथ कदाचिद्वज्रदंष्ट्रस्य केनचिद्वन्येन मत्तगजेन सह युद्धमभवत्। तेन मदवीर्यात्स दन्तप्रहारैस्तथा क्षतशरीरो विहितो यथा प्रचलितुं न शक्नोति। तत्क्षुत्क्षामस्तान्प्रोवाच । भो भवन्तः। अन्विष्यतां किंचित्सत्त्वं येनाहमेवस्थितोऽपि तद्व्यापाद्यात्मनो युष्माकं च क्षुत्प्रणाशं करोमि। तच्छ्रुत्वा ते त्रयोऽपि वने संध्याकालं यावद्भ्रान्ताः परं न किंचित्सत्त्वमासादितम् । अथ चतुरकश्चिन्तयामास। यदि शङ्कुकर्णोऽयं व्यापाद्यते ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति परं नैनं स्वामी मित्रत्वादाश्रयसमाश्रितत्वाच्च विनाश-

यिष्यति । अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये यथा व्यापादयिष्यति । उक्तं च ।

अवध्यं चाथवागम्यमकृत्यं नास्ति किंचन ।
लोके बुद्धिमतां बुद्धेस्तस्मात्तां विनियोजयेत् ॥ ३६९ ॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह । भोः शङ्कुकर्ण स्वामी तावत्पथ्यं विना क्षुधया पीड्यते । स्वाम्यभावादस्माकमपि ध्रुवं विनाश एव । ततो वाक्यं किंचित्स्वाम्यर्थे वदिष्यामि । तच्छ्रूयताम् । शङ्कुकर्ण आह । भोः शीघ्रं निवेद्यतां येन ते वचनं शीघ्रं निर्विकल्पं करोमि । अपरं स्वामिनो हिते कृते मया सुकृतशतं कृतं भविष्यति । अथ चतुरक आह । भो भद्र आत्मशरीरं द्विगुणलाभेन प्रयच्छ येन ते द्विगुणं शरीरं भवति स्वामिनः पुनः प्राणयात्रा भवति । तदाकर्ण्य शङ्कुकर्णः प्राह । भद्र यद्येवं तन्मदीयप्रयोजनमेतदुच्यताम् । स्वाम्यर्थः क्रियतामिति । परमत्र धर्मः प्रतिभूरिति ते विचिन्त्य सर्वे सिंहसकाशमाजग्मुः । ततश्चतुरक आह । देव न किंचित्सत्त्वं प्राप्तम् । भगवानादित्योऽप्यस्तंगतः । तद्यदि स्वामी द्विगुणं शरीरं प्रयच्छति ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति धर्मप्रतिभुवा । सिंह आह । भो यद्येवं तत्सुन्दरतरम् । व्यवहारस्यास्य धर्मः प्रतिभूः क्रियतामिति । अथ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपगतः । अथ वज्रदंष्ट्रश्चतुरकमाह । भोश्चतुरक यावदहं नदीं गत्वा स्नानदेवतार्चनविधिं कृत्वागच्छामि तावत्त्वयात्राप्रमत्तेन भाव्यमित्युक्त्वा नद्यां गतः । अथ तस्मिन्गते चतुरकश्चिन्तयामास । कथं ममैकाकिनो भोज्योऽयमुष्ट्रो भविष्यतीति विचिन्त्य क्रव्यमुखमाह । भोः क्रव्यमुख क्षुधालुर्भवान् । तद्यावदसौ स्वामी नागच्छति तावत्त्वमस्योष्ट्रस्य मांसं भक्षय । अहं त्वां स्वामिनो निर्दोषं प्रतिपादयिष्यामि । सोऽपि तच्छ्रुत्वा यावत्किंचिन्मांसमास्वादयति तावच्चतुरकेणोक्तम् । भोः क्रव्यमुख समागच्छति स्वामी- तत्त्यक्त्वैनं दूरे तिष्ठ येनास्य भक्षणं न विकल्पयति । तथानुष्ठिते सिंहः

समायातो यावदुष्ट्रं पश्यति तावद्रिक्तीकृतहृदयो दासेरकः। ततो भ्रूकुटिं कृत्वा परुषतरमाह। अहो केनैष उष्ट्र उच्छिष्टतां नीतो येन तमपि व्यापादयामि। एवमभिहिते क्रव्यमुखश्चतुरकमुखमवलोकयति। किल तद्वद किंचिद्येन मम शान्तिर्भवति। अथ चतुरको विहस्योवाच। भो मामनादृत्य पिशितं भक्षयित्वाधुना मन्मुखमवलोकयसि। तदास्वादयास्य दुर्नयतरोः फलमिति। तदाकर्ण्य क्रव्यमुखो जीवनाशभयाद्दूरदेशं गतः। एतस्मिन्नन्तरे तेन मार्गेण दासेरकसार्थो भाराक्रान्तः समायातः। तस्याग्रसरोष्ट्रस्य कण्ठे महती घण्टा बद्धा। तस्याःशब्दं दूरतोऽप्याकर्ण्य सिंहो जम्बुकमाह। भद्र ज्ञायतां किमेष रौद्रः शब्दः श्रूयतेऽश्रुतपूर्वः। तच्छ्रुत्वा चतुरकः किंचिद्वनान्तरं गत्वा सत्वरमभ्युपेत्य प्रोवाच। स्वामिन्गम्यतां गम्यतां यदि शक्नोषि गन्तुम्। सोऽब्रवीत्। भद्र किमेवं व्याकुलो दृश्यसे। तत्कथय किमेतदिति। चतुरक आह। स्वामिन् एष धर्मराजस्तवोपरि कुपितो यदनेनाकाले दासेरकोऽयं मदीयो व्यापादितस्तत्सहस्रगुणमुष्ट्रमस्य सकाशाद्ग्रहीष्यामीति निश्चित्य बृहन्मानमादायाग्रेसरस्योष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा वध्यदासेरकसक्तानपि पितृपितामहानादाय वैरनिर्यातनार्थमायात एव। सिंहोऽपि तच्छ्रुत्वा सर्वतो दूरादेवावलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात्प्रनष्टः। चतुरकोऽपि शनैः शनैस्तस्योष्ट्रस्य मांसं भक्षयामास॥

अतोऽहं ब्रवीमि परस्य पीडनं कुर्वन्निति।

अथ दमनके गते संजीवकश्चिन्तयामास। अहो किमेतन्मया कृतं यच्छष्पादोऽपि मांसाशिनस्तस्यानुगः संवृत्तः। अथवा साध्विदमुच्यते।

अगम्यान्यः पुमान्याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ३७०॥

तत्किं करोमि। क्व गच्छामि। कथं मे शान्तिर्भविष्यति। अथवा तमेव पिङ्गलकं गच्छामि कदाचिन्मां शरणागतं रक्षति प्राणैर्न वियोजयति। यत उक्तं च।

धर्मार्थं यततामपीह विपदो दैवाद्यदि स्युः क्वचि-
त्तत्तासामुपशान्तये सुमतिभिः कार्यो विशेषान्नयः ।
लोके ख्यातिमुपागतात्र सकले लोकोक्तिरेषा यतो
दग्धानां किल वह्निना हितकरः सेकोऽपि तस्योद्भवः ॥ ३७१ ॥

तथा च ।

लोकेऽथवा तनुभृतां निजकर्मपाकं
नित्यं समाश्रितवतां सुहितक्रियाणाम् ।
भावार्जितं शुभमथाप्यशुभं निकामं
यद्भावि तद्भवति नात्र विचारहेतुः ॥ ३७२ ॥

अपरं चान्यत्र गतस्यापि मे कस्यचिद्दुष्टसत्त्वस्य मांसाशिनः सकाशान्मृत्युर्भविष्यति । तद्वरं सिंहात् । उक्तं च ।

महता स्पर्धमानस्य विपदेव गरीयसी ।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे ॥ ३७३ ॥

तथा च ।

महतोऽपि क्षयं लब्ध्वा श्लाघ्यं नीचोऽपि गच्छति ।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः ॥ ३७४ ॥

एवं निश्चित्य स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयमपठत् । अहो साध्विदमुच्यते ।

अन्तर्लीनभुजङ्गमं गृहमिव व्यालाकुलं वा वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः ।
नानादुष्टजनैरसत्यवचनासक्तैरनार्यवृत
दुःखेन प्रतिगम्यते प्रचकितै राज्ञां गृहं वार्धिवत् ॥ ३७५ ॥

एवं पठन्दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा प्रचकितः संवृतशरीरो दूरतरं प्रणामकृतिं विनाप्युपविष्टः । पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्दधानः कोपात्तस्योपरि पपात। अथ संजीवकः खरनखरविकर्तितपृष्ठः शृङ्गाभ्यां तदुदरमुल्लिख्य कथमपि तस्मादपेतः शृङ्गाभ्यां हन्तुमिच्छन्युद्धायावस्थितः। अथ द्वावपि तौ

पुष्पितपलाशप्रतिमौ परस्परवधकाङ्क्षिणौ दृष्ट्वा करटको दमनकमाह। भो मूढमते अनयोर्विरोधं वितन्वता त्वया साधु न कृतम्। न च त्वं नीतितत्त्वं वेत्सि। नीतिविद्भिरुक्तं च।

कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
बुद्ध्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै-
स्तेषां दुर्नयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम्॥ ३७६॥

तद्यदि स्वाम्यभिघातो भविष्यति तत्किं त्वदीयमन्त्रबुद्ध्या क्रियते। अथवा यदि संजीवको न वध्यते तथाप्यभव्यं यतः प्राणसंदेहात्तस्य च वधः। तन्मूढ कथं त्वं मन्त्रिपदमभिलषसि। सामसिद्धिं न वेत्सि। तद्वृथा मनोरथोऽयं ते दण्डरुचेः। उक्तं च।

सामादिदण्डपर्यन्तो नयः प्रोक्तः स्वयंभुवा।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत्॥ ३७७॥

तथा च।

साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन॥ ३७८॥

तथा च।

आदौ साम प्रयोक्तव्यं पुरुषेण विजानता।
सामसाध्यानि कार्याणि विक्रियां यान्ति न क्वचित्॥ ३७९॥
न चन्द्रेण न चौषध्या न सूर्येण न वह्निना।
साम्नैव विलयं याति विद्वेषिप्रभवं तमः॥ ३८०॥

तथा यत्त्वं मन्त्रिपदमभिलषसि तदप्ययुक्तं यतस्त्वं मन्त्रगतिं न वेत्सि। यतः पञ्चविधो मन्त्रः स च कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति। सोऽयं स्वाम्यमात्ययोरेकतमस्य किंवा द्वयोरपि विनिपातःसमुत्पद्यते लग्नः। उक्तं च।

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ३८१ ॥

तन्मूर्ख नैतत्कर्तुं समर्थस्त्वम्। उक्तं च।

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम्।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ३८२ ॥

अथवा न ते दोषोऽयं स्वामिनो दोषो यस्ते वाक्यं श्रद्दधाति। उक्तं च।

नराधिपा नीचजनानुवर्तिनो
बुधोपदिष्टेन न यान्ति ये पथा।
विशन्त्यतो दुर्गममार्गनिर्गमं
समस्तसंबाधमनर्थपञ्जरम् ॥ ३८३ ॥

तद्यदि त्वमस्य मन्त्री भविष्यसि तदान्योऽप्यस्य समीपे साधुजनो न समेष्यति। उक्तं च।

गुणालयोऽप्यसन्मन्त्री नृपातिर्नाधिगम्यते।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ३८४ ॥

तथा शिष्टजनरहितस्य स्वामिनोऽपि नाशो भविष्यति। उक्तं च।

चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ३८५ ॥

तत्किं मूर्खोपदेशेन। केवलं दोषो न गुणः। उक्तं च।

नानाम्यं नमते दारु नाश्मनि स्यात्क्षुरक्रिया।
सूचीमुख विजानीहि नाशिष्यायोपदिश्यते ॥ ३८६ ॥

दमनक आह। कथमेतत्। सोऽब्रवीत्।

## कथा १७.

अस्ति कस्मिंश्चित्पर्वतैकदेशे वानरयूथम्। तच्च कदाचिद्धेमन्तसमये सौम्यवातसंस्पर्शवेपमानकलेवरं प्रवर्षद्धनधारानिपातसमाहतं

न कथंचिच्छान्तिमगमत्। अथ केचिद्वानरावह्निकणसदृशानि गुञ्जाफलानि विचित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात्तस्थुः । अथ सूचीमुखो नाम पक्षी तेषां तं वृथायासमवलोक्य प्रोवाच। भो भवन्तः सर्वे मूर्खतमाः। नैते वह्निकणा वह्निकणसदृशानि गुञ्जाफलान्येतानि। तत्किं वृथाश्रमेण । नैतस्माच्छीतरक्षा भवति । तदन्विष्यतां कश्चिन्निर्वातो वनप्रदेशो गुहा वा गिरिकन्दरं वा । अद्यापि साटोपो मेघो दृश्यते। अथ तेषामेकतमो वृद्धवानरस्तमुवाच। भोः किं तवानेन व्यापारेण। तद्गम्यताम्। उक्तं च।

मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितम्।
नालापयेद्विवेकज्ञो य इच्छेच्छ्रेय आत्मनः ॥ ३८७ ॥

तथा च।

आखेटकं वृथाक्लेशं मूर्खं व्यसनसंस्थितम्।
समालापेन यो युङ्क्ते स गच्छति पराभवम् ॥ ३८८ ॥

सोऽपि तमनादृत्य भूयोऽपि वानराननवरतमाह। भोः किं वृथाक्लेशेन। अथ यावदसौ न कथंचित्प्रलपन्विरमति तावदेकेन वानरेण व्यर्थश्रमत्वात्कुपितेन पक्षाभ्यां गृहीत्वा शिलायामास्फालित उपरतश्च ॥

अतोऽहं ब्रवीमि नानाम्यं नमते दार्वित्यादि।

तथा च।

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ ३८९ ॥
उपदेशो न दातव्यो यादृशे तादृशे जने।
पश्य वानरमूर्खेण सुगृही निर्गृहीकृता ॥ ३९० ॥

दमनक आह। कथमेतत्। सोऽब्रवीत्।

## कथा १८.

कस्मिंश्चिद्वने शमीवृक्षशाखालम्बितवसथं कृत्वारण्यचटकदंपती प्रतिवसतः स्म। अथ कदाचित्तयोः सुखसंस्थयोर्हेमन्तमेघो मन्दं

मन्दं वर्षितुमारब्धः। अत्रान्तरे कश्चिच्छाखामृगो वातासारसमाहतः प्रोद्धूषितशरीरो दन्तवीणां वादयन्वेपमानस्तस्याः शम्या मूलमासाद्योपविष्टः। अथ तं तादृशमवलोक्य चटका प्राह। भो भद्र।

हस्तपादसमोपेतो दृश्यसे पुरुषाकृतिः।
शीतेन भिद्यसे मूढ कथं न कुरुषे गृहम्॥ ३९१॥

एतच्छ्रुत्वा वानरः सकोपमाह यत्त्वं कस्मान्मौनव्रता न भवसि। अहो धार्ष्ट्यमस्याः। अद्य मामुपहसति।

सूचीमुखि दुराचारे रे रे पण्डितवादिनि।
नाशङ्कसे प्रजल्पन्ती तत्किमेनां न हन्म्यहम्॥ ३९२॥

एवं प्रलप्य तामाह। मुग्धे किं तव ममोपरि चिन्तया। उक्तं च।

वाच्यं श्रद्धासमेतस्य पृच्छतश्च विशेषतः।
प्रोक्तं श्रद्धाविहीनस्य अरण्यरुदितोपमम्॥ ३९३॥

तत्किं बहुना तावत्। स कुलायस्थितया तयाभिहितो यावत्तावच्छमीमारुह्य तं कुलायं शतधा भङ्गमनयत्॥

अतोऽहं ब्रवीम्युपदेशो न दातव्य इति।

तन्मूर्ख शिक्षापितोऽपि न शिक्षितस्त्वम्। अथवा न ते दोषोऽस्ति। यतः साधोः शिक्षा गुणाय संपद्यते नासाधोः। उक्तं च।

किं करोत्येव पाण्डित्यमस्थाने विनिवेशितम्।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः॥ ३९४॥

तद्व्यर्थपाण्डित्यं त्वमाश्रितः। मम वचनमशृण्वन्नात्मनः शान्तिमपि न वेत्सि। उक्तं च।

अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः॥ ३९५॥

अहो साध्विदमुच्यते।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात्पिता धूमेन घातितः॥ ३९६॥

दमनक आह। कथमेतत्। सोऽब्रवीत्।

# कथा १९.

कस्मिंश्चिद्देशे धर्मबुद्धिःपापबुद्धिश्च द्वे मित्रे प्रतिवसतः । अथ कदाचित्पापबुद्धिना चिन्तितं यदहं तावन्मूर्खो दारिद्रोपेतश्च । तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वास्याश्रयेणार्थोपार्जनां कृत्वैनमपि वञ्चयित्वा सुखीभवामि। अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह। भो मित्र वार्द्धकभावे किमात्मनश्चेष्टितं स्मरिष्यसि। देशान्तरमदृष्ट्वा कां शिष्टजनवार्त्तां कथयिष्यसि । उक्तं च ।

देशान्तरेषु बहुविधभाषावेषादि येन न ज्ञातम् ।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम् ॥ ३९७ ॥

तथा च ।

विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक् ।
यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥ ३९८ ॥

अथ तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम् । ततश्च तौ द्वावपि प्रभूतोपार्जितवित्तौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन प्रस्थितौ । उक्तं च ।

प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम् ।
क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत् ॥ ३९९ ॥

अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः। भद्र न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ति । तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किंचिन्मात्रमादाय गृहं प्रविशावो भूयोऽपि प्रयोजने संजाते तन्मात्रं समेत्यास्मात्स्थानान्नेष्यावः । उक्तं च ।

न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो ।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ ४०० ॥

तथा च ।

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ४०१ ॥

तदाकर्ण्य धर्मबुद्धिराह । भद्र एवं क्रियताम् । तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ । अन्यदा च पापबुद्धिर्निशीथे तत्रागत्य सर्वं वित्तमादाय गर्तां पूरयित्वा स्वभवनं जगाम । अथान्येद्युर्धर्मबुद्धिं समेत्य प्रोवाच । सखे बहुकुटुम्बा वयं वित्ताभावात्सीदामः । तद्गत्वा ततः स्थानात्किंचिद्वित्तमानयावः । सोऽब्रवीत् । भद्र एवं क्रियतामिति । अथ द्वावपि गत्वा यावत्स्थानं खनतस्तावद्रिक्तभाण्डं दृष्टवन्तौ । अत्रान्तरे पापबुद्धिः शिरस्ताडयन्प्रोवाच । भो धर्मबुद्धे त्वया हृतमेतद्धनं नान्येन यतो भूयोऽपि गर्तापूरणं कृतम् । तत्प्रयच्छ मे तस्यार्धम् । अथवाहं राजकुले निवेदयिष्यामि । स आह । भो दुरात्मन्मा मैवं वद । धर्मबुद्धिः खल्वहम् । नैतच्चौरकर्म करोमि । उक्तं च ।

मातृवत्परदाराणि परद्रव्याणि लोष्टवत् ।
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ ४०२ ॥

एवं तौ द्वावपि विवदमानौ धर्माधिकारिणं गतवन्तौ प्रोचतुः परस्परं दूषयन्तौ । अथ धर्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थं यावन्नियोजितौ तावत्पापबुद्धिराह अहो न सम्यग्दृष्टो न्यायः । उक्तं च ।

विवादेऽन्विष्यते पत्रं पत्राभावे तु साक्षिणः ।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः ॥ ४०३ ॥

अत्र विषये मम वृक्षदेवताः साक्षिभूताः सन्ति । तत्ता । एवावयोरेकतमं चौरं साधुं वा करिष्यन्ति । अथ तैः सर्वैरभिहितम् । भो युक्तमुक्तं भवता । उक्तं च ।

अन्त्यजोऽपि यदा साक्षी विवादे संप्रजायते ।
न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः ॥ ४०४ ॥

तदस्माकमप्यत्र विषये महत्कौतूहलमस्ति । तत्प्रत्यूषसमये द्वाभ्यामस्माभिः सह तत्र वनोद्देशे गन्तव्यमिति । अथ पापबुद्धिः स्वगृहं

गत्वा स्वजनकमुवाच । तात प्रभूतोऽयं मयार्थो धर्मबुद्धेश्चोरितः । स च तव वचनेन परिणतिं यास्यति । अन्यथा मम प्राणैः सह यास्यति । स आह । वत्स द्रुतं वद येन प्रोच्य तद्द्रव्यं स्थिरतां नयामि । पापबुद्धिराह । तात अस्ति तत्प्रदेशे महाशमी । तस्यां महत्कोटरमस्ति । तत्र त्वं सांप्रतमेव प्रविश । ततः प्रभातेऽहं यदा सत्यश्रावणं करोमि तदा त्वया वाच्यं यद्धर्मबुद्धिश्चौर इति । तथानुष्ठिते प्रत्यूषे पापबुद्धिः स्नात्वा धर्मबुद्धिपुरःसरो राजपुरुषैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच ।

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मोऽपि जानाति नरस्य वृत्तम् ॥ ४०५ ॥

तत्कथयत वनदेवता आवयोर्यश्चौर इति । अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच । भो धर्मबुद्धिना हृतमेतद्धनम् । तदाकर्ण्य सर्वे राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति तावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवार्य वह्निना संदीपितम् । अथ ज्वलति तस्मिञ्शमीकोटरेऽर्धदग्धशरीरः स्फुटितेक्षणः करुणं परिदेवयन्पापबुद्धिपिता निश्चक्राम । ततस्तैः सर्वैः पृष्टः सर्वं पापबुद्धिचेष्टितं निवेदयामास । अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः । अहो साध्विदमुच्यते ।

उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलेन हता बकाः ॥ ४०६ ॥

धर्मबुद्धिः प्राह । कथमेतम् । ते प्रोचुः ।

## कथा २०.

अस्ति कस्मिंश्चिद्वनोद्देशे बहुबकसनाथो वटपादपः । तस्य कोटरे

कृष्णसर्पः प्रतिवसति स्म । स च बकबालकानजातपक्षानपि सदैव भक्षयन्कालं नयति । अथैको बको भक्षितशिशुवैराग्यात्सरस्तीरमासाद्य बाष्पपूरप्लुतलोचनोऽधोमुखस्तिष्ठति । तं च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच । माम किमेवं रुद्यते भवताद्य । स आह । भद्र किं करोमि । मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः । दुःखितोऽहं तद्दुःखेन । तत्कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय । तदाकर्ण्य कुलीरकश्चिन्तयामास । अयं तावतदस्मत्सहजवैरी । तथोपदेशं प्रयच्छामि सत्यानृतं यथान्येऽपि बकाः सर्वे संक्षयमायान्ति । उक्तं च ।

नवनीतसमां वाणीं कृत्वा चित्तं सुनिर्दयम् ।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा ॥ ४०७ ॥

आह च । माम यद्येवं तन्मत्स्यमांसशकलानि नकुलस्य बिलद्वारात्सर्पकोटरं यावत्प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति । अथ तथानुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे बकाश्च शनैः शनैर्भक्षिताः ।

अतो वयं ब्रूम उपायं चिन्तयेदिति ॥

तदनेन पापबुद्धिनोपायश्चिन्तितो नापायः । तस्य प्राप्तं फलम् । एवं मूढ त्वयाप्युपायश्चिन्तितो नापायः । पापबुद्धिवत् । तन्न चासि त्वं सज्जनः केवलं पापबुद्धिरसि ज्ञातो मया स्वामिनः प्राणसंदेहानयनात् । प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यं च । अथवा साध्विदमुच्यते ।

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम् ।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः ॥ ४०८ ॥

तद्यदि त्वं स्वामिनं एनां दशां नयसि तदस्मद्विधस्य का गणना तस्मान्ममासन्नेन भवता न भाव्यम् । उक्तं च ।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥ ४०९ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

## कथा २१.

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः । स च द्रव्यक्षयाद्देशान्तरगमनमना व्यचिन्तयत् ।

यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः ।
तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥ ४१० ॥

तथा च ।

येनाहंकारयुक्तेन चिरं विलसितं पुरा ।
दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ४११ ॥

तस्य च गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुलासीत् । तां च कस्यचिच्छ्रेष्ठिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः । ततः सुचिरं कालं देशान्तरं भ्रान्त्वा पुनस्तदेव स्वपुरमागत्य तं श्रेष्ठिनमुवाच । भोः श्रेष्ठिन्दीयतां मे सा निक्षेपतुला । स आह । भो नास्ति सा त्वदीया तुला । मूषिकैर्भक्षिता । जीर्णधन आह । भोः श्रेष्ठिन्नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति । ईदृगेव संसारः । न किंचिदत्र शाश्वतमस्ति । परमहं नद्यां स्नानार्थं गमिष्यामि । तत्त्वमात्मीयं शिशुमेतं मया सह स्नानोपकरणहस्तं प्रेषयेति । सोऽपि चौर्यभयात्तस्य शङ्कितः स्वपुत्रमुवाच । वत्स पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति । तद्गम्यतामनेन सार्धं स्नानोपकरणमादायेति । अहो साध्विदमुच्यते ।

न भक्त्या कस्यचित्कोऽपि प्रियं प्रकुरुते नरः ।
मुक्त्वा भयं प्रलोभं वा कार्यकारणमेव वा ॥ ४१२ ॥

तथा च ।

अत्यादरो भवेद्यत्र कार्यकारणवर्जितः ।
तत्र शङ्का प्रकर्तव्या परिणामे सुखावहा ॥ ४१३ ॥

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनास्तेनाभ्यागतेन सह प्रस्थितः । तथानुष्ठिते वणिक्स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाच्छाद्य सत्वरं गृहमागतः । पृष्टश्च तेन वणिजा भो अभ्यागत तत्कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गत इति । स आह । नदीतटात्स श्येनेन हृत इति । श्रेष्ठ्याह । मिथ्यावादिन्किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति । तत्समर्पय मे सुतमन्यथा राजकुले निवेदयिष्यामीति । स आह । भोः सत्यवादिन्यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति । तदर्पय मे तुलां यदि दारकेण प्रयोजनम् । एवं विवदमानौ द्वावपि राजकुलं गतौ । तत्र श्रेष्ठी तारस्वरेण प्रोवाच । भो अब्रह्मण्यमब्रह्मण्यम् । मम शिशुरनेन चौरेणापहृतः । अथ धर्माधिकारिणस्तमूचुः । भोः समर्प्यतां श्रेष्ठिसुतः । स आह । किं करोमि । पश्यतो मे नदीतटाच्छ्येनेनापहृतः शिशुः । तच्छ्रुत्वा ते प्रोचुः । भो न सत्यमभिहितं भवता । किं श्येनः शिशुं हर्तुं समर्थो भवति । स आह । भो भोः श्रूयतां मद्वचः ।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥ ४१४ ॥

ते प्रोचुः । कथमेतत् । ततः श्रेष्ठी सभ्यानामादितः सर्वं वृत्तान्तं निवेदयामास । ततैर्विहस्य द्वावपि तौ परस्परं संबोध्य तुलाशिशुप्रदानेन संतोषितौ ॥

अतोऽहं ब्रवीमि तुलां लोहसहस्रस्येति ॥

तन्मूर्ख संजीवकप्रसादमसहमानेन त्वयैतत्कृतम् । अहो साध्विदमुच्यते ।

प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्तान्वितं निर्धनाः ।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खा जनाः ॥ ४१५ ॥

तथा च ।

मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः ।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ४१६ ॥

तन्मूर्ख त्वया हितमप्याहितं कृतम् । उक्तं च ।

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः ॥ ४१७ ॥

दमनक आह । कथमेतत् । सोऽब्रवीत् ।

# कथा २२.

कस्यचिद्राज्ञो नित्यं वानरोऽतिभक्तिपरोऽङ्गसेवकोऽन्तःपुरेऽप्यप्रतिषिद्धप्रसरोऽतिविश्वासस्थानमभूत् । एकदा राज्ञो निद्रां गतस्य वानरे व्यजनं नीत्वा वायुं विदधति राज्ञो वक्षःस्थलोपरि मक्षिकोपविष्टा । व्यजनेन मुहुर्मुहुर्निषिध्यमानापि पुनःपुनस्तत्रैवोपविशति । ततस्तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीव्रं खड्गमादाय तस्या उपरि प्रहारो विहितः । ततो मक्षिकोड्डीय गता परं तेन शितधारेणासिना राज्ञो वक्षो द्विधा जातं राजा मृतश्च । तस्माच्चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः॥अपरमेकस्मिन्नगरे कोऽपि विप्रो महाविद्वान्परं पूर्वजन्मयोगेन चौरो वर्तते । तस्मिन्पुरेऽन्यदेशादागतांश्चतुरो विप्रान्बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान् । अहो केनोपायेनैषां धनं लभे । इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि चातिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्तुमारब्धा । अथवा साध्विदमुच्यते ।

असती भवति सलज्जा क्षारं नीरं च शीतलं भवति ।
दम्भी भवति विवेकी प्रियवक्ता भवति धूर्तजनः ॥ ४१८ ॥

अथ तस्मिन्सेवां कुर्वति तैर्विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि । ततस्तानि जङ्घामध्ये तत्समक्षं प्रक्षिप्य स्वदेशं प्रति

गन्तुमुद्यमो विहितः । ततः स धूर्तविप्रस्तान्विप्रान्गन्तुमुद्यतान्प्रेक्ष्य चिन्ताव्याकुलितमनाः संजातः । अहो धनमेतन्न किंचिन्मम घटितम् । अथैभिः सह यामि । पथि क्वापि विषं दत्त्वैतान्निहत्य सर्वरत्नानि गृह्णामि । इति विचिन्त्य तेषामग्रे सकरुणं विलप्येदमाह । भो मित्राणि यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः । तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नैवाकुलं संजातं यथा धृतिं क्वापि न धत्ते । ततो यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत । तद्वचः श्रुत्वा ते करुणार्द्रचित्तास्तेन सममेव स्वदेशं प्रति प्रस्थिताः । अथाध्वनि तेषां पञ्चानामपि पल्लीपुरमध्ये व्रजतां ध्वाङ्क्षाः कथयितुमारब्धाः । रे रे किराता धावत धावत । सपादलक्षधनिनो यान्ति । एतान्निहत्य धनं नयत । ततः किरातैर्ध्वाङ्क्षवचनमाकर्ण्य सत्वरं गत्वा ते विप्रा लगुडप्रहारैर्जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोलिताः परं धनं किंचिन्न लब्धम् । तदा तैः किरातैरभिहितम् । भोः पान्थाः पुरा कदापि ध्वाङ्क्षवचनमनृतं नासीत् । ततो भवतां संनिधौ क्वापि धनं विद्यते तदर्पयत । अन्यथा सर्वेषामपि वधं विधाय चर्म विदार्य प्रत्यङ्गं प्रेक्ष्य धन नेष्यामः । तदा तेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम् । यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति तदापि मां वधिष्यन्ति ततोऽहं पूर्वमेवात्मानमरत्नं समर्प्यैतान्मुञ्चामि । उक्तं च ।

मृत्योर्बिभेषि किं बाल न स भीतं विमुञ्चति ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ४१९ ॥

तथा च ।

गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः ।
सूर्यस्य मण्डलं भित्त्वा स याति परमां गतिम् ॥ ४२० ॥

इति निश्चित्याभिहितम् । भोः किराता यद्येवं ततो मां पूर्वं निहत्य विलोकयत । ततस्तैस्तथानुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोऽपि मुक्ताः ॥

अतोऽहं ब्रवीमि पण्डितोऽपि वरं शत्रुरिति ।

अथैवं संवदतोस्तयोः संजीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहाराभिहतो गतासुर्वसुंधरापीठे निपपात । अथ तं गतासुमवलोक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः प्रोवाच । भो अयुक्तं मया पापेन कृतं संजीवकं व्यापादयता यतो विश्वासघातादन्यन्नास्ति पापतरं कर्म । उक्तं च ।

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ४२१ ॥

तथा मया सभामध्ये स सदैव प्रशंसितः । तत्किं कथयिष्यामि तेषामग्रतः ।

उक्तं च ।

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥ ४२२ ॥

एवंविधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह । देव कातरतमस्तवैष न्यायो यद्द्रोहकारिणं शष्पभुजं हत्वेत्थं शोचसि । तन्नैतदुपपन्नं भूभुजाम् । उक्तं च ।

पिता वा यदि वा भ्राता पुत्रो भार्याथवा सुहृत् ।
प्राणद्रोहं यदा गच्छेत्तं घ्नतो नास्ति पातकम् ॥ ४२३ ॥

तथा च ।

राजा घृणी ब्राह्मणः सर्वभक्षी
स्त्री चावशा दुष्टमतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ ४२४ ॥

अपि च ।

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।

भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४२९ ॥

एवं तेन संबोधितः पिङ्गलकः संजीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत् ॥

॥ समाप्तं चेदं मित्रभेदं नाम प्रथमं तन्त्रम् ॥

# NOTES.

P. 1, L. 1,—शारदा is a name of Sarasvatî, the goddess of eloquence.

2.—महाकवि, 'a great poet,' such as Kâlidâsa, the author of the Raghuvans'a, the Kumârasambhava, and the Meghadûta; Mâgha, the author of the S'is'upâlavadha; etc.

3.—Metre of s'l. 1: Âryâ.

3.—अर्थशास्त्र, a book containing practical precepts or moral tales on conduct in life, especially such conduct as tends to the increase of one's prosperity.

3.—इदम्, 'this,' *i. e.*, what is told in the Panchatantra.

5.—तद्यथा, 'this (is) as (follows),' 'namely'; तद्यथानुश्रूयते, 'it is namely heard,' 'it is namely reported,' 'we are namely told' (that there was in the southern country, etc.)

5.—अस्ति, historical Present, 'there was.'

6.—सकलार्थिसार्थकल्पद्रुमः 'a wishing-tree for the multitude of all supplicants.'

6.—प्रवरनृप; other noble princes paid homage to Amaras'akti by prostrating themselves at his feet, which therefore are said to have been covered with the rays issuing from the diadems of those princes.

7.—पारं गम् 'to go to the extreme end of, to master completely.'

13.—It is better that a son should die, or that no son at all should be born, than that a son should be stupid.

14.—स्वल्पदुःखाय *scil.* भवतः; 'to be to very little pain, to cause very little pain.'

15.—Metre of s'l. 3: S'ikharinî.

15.—वरम्—न 'better—than;' वर, being derived from root वृ 'to select, to choose,' means originally 'selection, choice, what is chosen,' and expressions like वरं कन्या नाविद्वांस्तनयः ought therefore properly to be translated ('if one has the choice between a girl and an ignorant son) a girl is chosen, not an ignorant son,' which may then be expressed more freely by 'a girl is better than an ignorant son.'

16.—जातमृतः a Karmadhâraya-compound; see Grammar § 553; 'first born and afterwards deceased;' cf. p. 18, 1. संमानितविमानिताः.

18.—रूपद्रविणगुण 'beauty, wealth and (other) excellencies.'

20.—कोऽर्थः with the Instr., 'what is the advantage of, what is the use of.'

22.—पञ्चशती f., instead of the usual n. पञ्चशतम्.

24.—द्वादशभिर्वर्षैः 'in twelve years'; the Instr. denotes the period of time necessary for the completion of anything; cf. p. 2, 1. 16, मासषट्केन; 5, 19, कतिपयैरहोभिः; 26, 3 स्वल्पैरेवाहोभिः etc.

24.—श्रूयते 'it is heard, it is studied, it is learnt.'

P. 2, L. 1.—चाणक्यादीनि; Chânakya is famous as the author of a code of practical precepts on conduct in life, and as a writer on the principles of government. It was chiefly by his assistance that Chandragupta obtained the sovereignty of India; cf. M. Müller, A History of Ancient Sanskrit Literature, p. 281, etc.

1.—वात्स्यायनादीनि *scil.* श्रूयन्ते; Vâtsyâyana is known as the author of a work entitled *Kâmasûtra*, 'Institutes of love,' which is still extant.

6.—Metre of s'l. 5: Upajâti.

6.—किल, 'certainly,' 'as everybody knows or admits.'

9.—Supply गृह्यते. It is a well-known story that there are two kinds of swans, the common kind, and a superior kind which lives in paradise and only rarely appears on earth. To ascertain whether a swan belongs to one or the other class, a vessel containing milk and water mixed should be placed before it; a swan of the superior class is supposed to be able to separate the milk from the water and to drink the former alone, leaving the water behind.—यथा would have been sufficient, without इव.

11.—तु makes the request more urgent; cf. p. 39, 28.

11.—नूनम् 'surely, in all probability.'

12.—स राजा 'the king;' the pronoun तद् is frequently used like the English article; cf. l. 15 तं राजानम्, 17 तां ब्राह्मणस्यासंभाव्यां प्रतिज्ञाम्, etc.

16.—मासषट्केन; cf. p. 1, l. 24.

18.—असंभाव्य 'inconceivable, incredible.'

20.—अपि 'on the other hand, in his turn.'

21—अपरीक्षितकारक is properly an adjective, meaning 'one who does anything inconsiderate;' as the title of a तन्त्र of the Panchatantra however, it becomes, like मित्रभेद and लब्धप्रणाश, a neuter substantive, and we read therefore at the commencement of the fifth book अपरीक्षितकारकं नाम पञ्चमं तन्त्रम्, 'the fifth book,' entitled "the doer of inconsiderate things, 'the inconsiderate man."

21.—चेति; च occurs occasionally after a Dvandva-compound, where it is, strictly speaking, superfluous, because its sense is expressed already by the compound.

21.—तन्त्राणि is the object both of रचयित्वा and of पाठिताः.

24.—किं बहुना 'what with more? what need I say more? in short.'

P. 3, L. 1.—मित्रभेद, 'the separation of friends,' is a masculine, but when referred to तन्त्रम् it becomes a neuter, 'the first book,' entitled "the separation of friends"; cf. लब्धप्रणाशम् and अपरीक्षित-कारकम् at the beginning of the fourth and fifth Tantras; and such titles as अभिज्ञानशाकुन्तलं नाम नाटकम्, etc.

4.—तद्यथानुश्रूयते, cf. p. 1, 5.

5.—वर्धमानकः ; in the following he is called Vardhamâna; cf. p. 5, 4; 25, 21.

7.—चिन्तनीयाः कर्तव्याश्च 'to be devised and carried out.'

9.—अर्थमेकम् 'wealth alone, wealth exclusively.'

13.—'Which by the needy is not sung of the rich,' *i. e.*, which, the needy do not ascribe to the rich.

14.—धनिनां परोऽपि 'even a stranger if he be one of the rich, *i. e.* if he be rich.'

20.—स्युः कार्याण्यखिलान्यपि, *scil.* वित्तात्; as the organs of sense are dependent on eating, so are all actions on wealth, *i. e.* they do not succeed without it.

22.—श्मशानमपि सेवते 'frequent even burial-grounds,' *i. e.*, they will endure the worst horrors imaginable, if by doing so they can only satisfy their greediness.

23.—दूरतः 'from afar, far away.'

24.—Metre of s'l. 10: Âryâ.

P. 4, L. 2.—विद्योपार्जना 'acquisition of knowledge,' with the view of obtaining a livelihood by one's learning.

3.—Construe वाणिज्येनार्थलाभोऽतिरस्कृतः स्यात्.

4.—Metre of s'l. 11: S'ikharinî.

5.—सेवनविधि means here the attendance on a Guru for the sake of being instructed by him; it is called प्रचुरगहन 'rich in impenetrable or impervious passages' because it is fraught with many difficulties.

6.—परकरगतग्रन्थिशमनात् 'because it makes an end of one's purse (properly, the knot in which one's money is tied up), which has gone (by it) into another man's hands.'

7.—परम has here the meaning of a comparative, 'more excellent, superior.'

8.—उपायः 'a means, a real means, best means.'

9.—तदन्यः = तस्मादन्यः, तस्माद्भिन्नः.

11.—गोष्ठिककर्मन् is said to mean 'the transaction of business for a company;' मिथ्याक्रय 'false price.'

13.—पण्यम्; cf. the explanation of उपायः in l. 8.

16.—म्रियते 'he dies,' *i. e.* if he dies.

17.—Metre of s'l. 15, 16, and 17: Âryâ.

23.—The Kirâtas are a barbarous mountain tribe; originally Kshatriyas, they are supposed to have become S'ûdras by their neglect of all religious rites.

27.—मथुरा N. of an ancient famous town, now called Mattra; it is situated near Agra, on the right bank of the river Yamunâ, *i. e.*, the modern Jamna.

P. 5, L. 1.—मङ्गलवृषभ 'a bull with auspicious marks,' such as particular marks on the forehead or breast, or a tail that reaches down below the knee, etc.

3.—पङ्कपूर 'a great quantity of mud, deep mud;' कलितचरण 'broken-legged.'

10.—स्वल्पात् 'from or by a very little,' *i. e.* by sacrificing very little.

12.—नीत्वा 'having led or taken,' *i. e.* 'together with,' San-

skṛit Gerunds may often in English be rendered by prepositions; cf. p. 29, 27 उद्दिश्य 'towards;' 38, 21 मुक्त्वा 'except;' 44, 15; 64, 15; 76, 24; 89, 22; 91, 11; etc.

15.—वह्निना संस्कृ 'to hallow by fire, to burn solemnly.'

16.—वृषोत्सर्ग 'the setting free of a bull.' At the death of a person his relations set a bull free and allow it to roam about at liberty till it dies; it is recognised by a particular sign put on its back, and nobody touches it from the time of its liberation.

17.—आयुःशेषता is a secondary noun derived from the Bahuvrîhi-compound आयुःशेष.

19.—हरवृषभ 'the bull of Hara, *i. e.*, S'iva,' the bull being the vehicle of S'iva.

21.—आस्ते. The rt. आस् 'to sit' employed with the Participle of another verb denotes the continuity of the action expressed by the Participle; प्रगर्जन्नास्ते 'he bellows continually.'

22.—Metre of s'l. 20=s'l. 323: Vans'astha.

25.—कृतप्रयत्न 'one for whose sake efforts are being made, well taken care of.'

P. 6, L. 1.—आकार 'the countenance, the expression of the face as indicating the disposition of the mind.'

3.—Two MSS. from Gujarât read काकरवर्गः instead of काकरवाः. काकरवर्गौ मध्यमवर्गः । किंवृत्ता वनान्तस्थानवासिनः । उत्तममध्यमाधमास्त्रय इति ॥

5.—मन्त्रयतः; the verb मन्त्र is usually conjugated in the Âtmanepada only.

10.—अव्यापार 'not-business,' *i. e.*, a business or occupation that does not concern one.

19.—अत्रान्तरे = अस्मिन्नन्तरे, literally 'in this interval,' on that occasion, meanwhile, then.

20.—यथेच्छया occurs several times for the more usual and correct form यथेच्छम्; it seems to have been formed incorrectly on the analogy of स्वेच्छया.

22.—स्वस्थानाच्चलितकीलकेन 'by the wedge moved from its place,' *i. e.*, in consequence of the wedge being removed from its place.

24.—भक्षितशेष, a Tatpurusha-compound, 'remaining from what has been eaten,' remaining after we have eaten.

P. 7, L. 1.—Metre of s'l. 22: Vaitalîya. The two Ablatives in this line denote the cause (हेतु) why, or, which is here the same, the object (प्रयोजन) to attain which, people attend on princes.

4.—जीवति 'he lives,' *i. e.*, he really lives, his existence only deserves to be called life.

6.—Metre of s'l. 24: Vasantatilakâ.

7.—आर्यगुण 'a noble quality.'

13.—जातु 'at all, ever;' किं जातु 'what is the use at all? whatever can be the use?'

16.—वा 'or' makes the question more urgent and general by opposing it to some assumption made by the speaker but not necessarily expressed by him; as in the present case '(every person that has died is born again) or who is not born again?' वा may then be translated by 'I should like to know, possibly' etc.; को वा 'who possibly?'

17.—जातः; cf. the explanation of जीवति p. 7, 4.

17.—अन्वयाधिकम् = अन्वयादधिकम्.

19.—Metre of s'l. 28: Âryâ.

22.—The two adjectives in this line refer both to जलदाः and to सज्जनाः; स्तिमित means 'wet, moist,' and 'fixed, steady.'

24.—Metre of s'l. 30 and 31: Âryâ.

25.—महतामपि यो गुरुर्भवति 'who is an object of respect even for great men.'

P. 8, L. 6.—स्थायीभू; see Grammar, § 489.

11.—Metre of s'l. 35: Vasantatilakâ.

12.—असंस्कृत 'one who has not undergone or performed the sacred ceremonies prescribed for a man of the three first castes.'

25.—कियती मात्रा literally 'how great a measure?' How great a measure is a king for the wise, *i. e.*, what account do wise men make of a king? Cf. p. 39, 28 कियन्मात्र; 65, 18 का मात्रा; 71, 17.

26.—परा गतिः 'a high path, a high or exalted position.'

27.—मलय is the name of a mountainous range on the western coast of the Indian peninsula on which the best sandal-wood

trees grow.—अन्यत्र with the Ablative of मलय, and without विना, would have been sufficient and more usual in the older language.

P. 9, L. 1.—White umbrellas are given as a mark of honour.

2.—भूपतौ; see Grammar, § 139.

8.—Metre of s'l. 43: Vans'astha.

11.—परेङ्गितज्ञानफलाः is a Bahuvrîhi-compound.

12.—मनुः; cf. Manu Dharmas'âstra VIII., 26.

18.—The Pâṇḍavas resolved in the thirteenth year of their exile to go to the city of king Virâṭa and to enter into his service. On this occasion their priest Dhaumya told them how servants ought to conduct themselves. Cf. Virâṭaparvan 89, etc.

20.—चि with prep. वि, 'to collect, to gather, to gather fruit or flowers from.'

22.—'According to a special saying, that must be understood to be service which is good for one's master,' *i. e.*, he is a good servant who has his master's welfare at heart. With वाक्यविशेषतः cf. वाक्यतः in s'l. 366.

24.—S'l. 47 nearly = s'l. 350.

27.—कालान्तरादपि 'even after an interval of time,' *i. e.*, even if it be only after the lapse of some time.

P. 10, L. 2.—अनात्मसंपन्न, = अनात्मवत् = अजितेन्द्रिय.

6.—अर्क N. of a plant which, though frequently used in medicine, is supposed to possess some dangerous qualities.

9.—जीव 'live'; the Marâṭhî particle जी 'expressing assent from an inferior' appears to be a corruption of this Sanskṛit word.

12.—अङ्गे 'on his own body.'

15.—Supply यः from the context. For the usual conjugation of क्रम् see Grammar § 248.

19.—यः पश्येत् 'he who can look upon or consider.'

20.—वृथाकार, a Bahuvrîhi-compound, 'one whose form or appearance is vain or only an illusion.'

25.—वदताम् 'of those that speak or converse,' *i.e.*, when people converse with one another.

27.—Metre of s'l. 61 : Upajâti.

काकिनीं कन्यामवलोक्य मा भैषीरहं परित्रातेति सुधीरं स्थिरीकृत्य दक्षिणपाणौ संगृह्य महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर्हस्तिनं निर्भर्त्सितवान् । ततः कथमपि दैवयोगादपयाते हस्तिनि यावत्ससुहृद्बान्धवोतिक्रान्ते लग्नसमये वरकीर्तिरागच्छति तावत्तां कन्यामन्यहस्तगतां दृष्ट्वाभिहितम् । भोः श्वशुरक विरुद्धमिदं त्वयानुष्ठितं यन्मह्यं प्रदाय कन्यान्यस्मै प्रदत्तेति । सोब्रवीत् । भो अहमपि हस्तिभयपलायितो भवद्भिः सहायातो न जाने किमिदं वृत्तम् । इत्यभिधाय दुहितरं प्रष्टुमारब्धः । वत्से न त्वया सुन्दरं कृतम् । तत्कथ्यतां कोयं वृत्तान्तः । साब्रवीत् । यदहमनेन प्राणसंशयाद्रक्षिता तदेनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यतीति । अनेन वार्त्ताव्यतिकरेण रजनी व्युष्टा । अथ प्रातस्तत्र संजाते महाजनसमवाये वार्त्ताव्यतिकरं श्रुत्वा राजदुहिता तं देशमागता । कर्णपरंपरया श्रुत्वा दण्डपाशकसुतापि तत्रैवागता । अथ तं महाजनसमवायं श्रुत्वा राजापि तत्रैवाजगाम । प्राप्तव्यमर्थं प्राह । यद्विश्रब्धं कथय कीदृशोसौ वृत्तान्तः । अथ सोब्रवीत् । प्राप्तव्यमर्थं लभते मनुष्य इति । राजकन्या स्मृत्वाब्रवीत् । देवोपि तं लङ्घयितुं न शक्तः । ततो दण्डपाशकसुताब्रवीत् । तस्मान्न शोचामि न विस्मयो म इति । तमखिललोकवृत्तान्तमाकर्ण्य वणिक्सुताब्रवीत् । यदस्मदीयं न हि तत्परेषामिति । अभयदानं दत्त्वा राजा पृथक्पृथग्वृत्तान्ताञ्ज्ञात्वावगततत्त्वस्तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण समं सर्वालंकारपरिवारयुतां दत्त्वा त्वं मे पुत्रोसीति नगरविदितं तं यौवराज्येभिषिक्तवान् । दण्डपाशकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना संभाव्य प्राप्तव्यमर्थाय प्रदत्ता । अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे संमानपुरःसरं समानीतौ । अथ सोपि स्वगोत्रेण सह विविधभोगानुपभुञ्जानः सुखेनावस्थितः । अतोहं ब्रवीमि ।

प्राप्तव्यमर्थं लभते मनुष्यो
देवोपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ।। १०९ ।।

तदेतत्सकलं सुखदुःखमनुभूय परं विषादमागतोनेन मित्रेण त्वत्सकाशमानीतः । तदेतन्मे वैराग्यकारणम् । मन्थरक आह । भद्र भवति सुहृदयमसंदिग्धं यः क्षुत्क्षामोपि शत्रुभूतं त्वां भक्षस्थाने स्थितमेवं पृष्ठमारोप्यानयति न मार्गेपि भक्षयति । उक्तं च यतः ।

विकारं याति नो चित्तं वित्ते यस्य कदाचन ।
मित्रस्य सुकुलीनस्य कारयेन्मित्रमुत्तमम् ।। ११० ।।
विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम् ।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः ।। १११ ।।

तथा च ।

आपत्काले तु संप्राप्ते यन्मित्रं मित्रमेव तत् ।
वृद्धिकाले तु संप्राप्ते दुर्जनोपि सुहृद्भवेत् ।। ११२ ।।

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो यतो नीतिविरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम् । अथवा साध्विदमुच्यते ।

मित्रं कोपि न कस्यापि नितान्तं न च वैरकृत् ।
दृश्यते मित्रविध्वस्तः कार्याद्वैरिप्ररक्षितः ।। ११३ ।।

तत्स्वागतं भवतः । स्वगृहवदास्यतामत्र सरस्तीरे । यच्च वित्तनाशो विदेशवासश्च ते संजातस्तत्र विषये संतापो न कर्तव्यः । उक्तं च ।

अभ्रच्छाया खलप्रीतिः सिद्धमन्नं च योषितः ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ।। ११४ ।।

अत एव विवेकिनो जितात्मानो धनस्पृहां न कुर्वन्ति । उक्तं च ।

सुसंचितैर्जीवनवत्सुरक्षितै-
र्हे न वियोजितैः क्वचित् ।

पुंसो यमान्तं व्रजतोपि निष्ठुरै-
रेतैर्धनैः पञ्चपदी न दीयते ॥ ११५ ॥

अन्यच्च ।

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ११६ ॥

निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः ।
निर्धनः प्राप्तदोषोपि सर्वत्र निरुपद्रवः ॥ ११७ ॥

अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ ११८ ॥

अर्थार्थी यानि कष्टानि मूढोयं सहते जनः ।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥ ११९ ॥

अपरं विदेशवासजमपि वैराग्यं त्वया न कार्यम् । यतः ।

को धीरस्य मनस्विनः स्वविषयः को वै विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गुलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १२० ॥

अर्थहीनः परे देशे गतोपि यः प्रज्ञावान्भवति स कथंचिदपि न सीदति । उक्तं च ।

कोतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥ १२१ ॥

तत्प्रज्ञानिधिर्भवान्न प्राकृतपुरुषतुल्यः । अपरं प्राप्तोप्यर्थः कर्मप्राप्त्या नश्यति । तदेतावन्ति दिनानि त्वदीयमासीत् । मुहूर्तमप्यात्मीयं भोक्तुं न लभ्यते स्वयमागतमपि विधिनापह्रियते ।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १२२ ॥

हिरण्यक आह । कथमेतत् । स आह ।

## कथा ८.

अस्ति कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको वसति स्म । सोनेकविधपटरचनारञ्जितानि पार्थिवोचितानि सदैव वस्त्राण्युत्पादयति । परं तस्य चानेकविधपट्टरचननिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमप्यर्थमात्रं संपद्यते । अथान्ये तत्र सामान्यकौलिकाः स्थूलवस्त्रसंपादनविज्ञानिनो महर्द्धिसंपन्नाः । तानवलोक्य स स्वभार्यामाह । प्रिये पश्यैतान्स्थूलपट्टकारकान्धनकनकसमृद्धान् । तदधारणकं ममैतत्स्थानम् । तदन्यत्रोपार्जनाय गच्छामि । सा प्राह । भोः प्रियतम मिथ्या प्रलपितमेतद्यदन्यत्र गतानां धनं भवति स्वस्थाने न भवति । उक्तं च ।

उत्पतन्ति यदाकाशे निपतन्ति महीतले ।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति ॥ १२३ ॥

तथा च ।

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन ।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति ॥ १२४ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १२५ ॥

शेते सह शयानेन गच्छन्तमनुगच्छति ।
नराणां प्राक्तनं कर्म तिष्ठति तु सहात्मना ॥ १२६ ॥

यथा छायातपौ नित्यं सुसंबद्धौ परस्परम् ।
एवं कर्म च कर्ता च संश्लिष्टावितरेतरम् ॥ १२७ ॥

तस्मादत्रैव व्यवसायपरो भव । कौलिक आह । प्रिये न सम्यगभिहितं भवत्या । व्यवसायं विना न कर्म फलति । उक्तं च ।

यथैकेन न हस्तेन तालिका संप्रपद्यते ।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम् ॥ १२८ ॥

पश्य कर्मवशात्प्राप्तं भोज्यकालेपि भोजनम् ।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथंचन ॥ १२९ ॥

तथा च ।

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोत्र दोषः ॥ १३० ॥

तथा च ।

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य विशन्ति वदने मृगाः ॥ १३१ ॥
उद्यमेन विना राजन्न सिध्यन्ति मनोरथाः ।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ १३२ ॥
स्वशक्त्या कुर्वतः कर्म न चेत्सिद्धिं प्रयच्छति ।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥ १३३ ॥

तन्मयावश्यं देशान्तरं गन्तव्यम् । इति निश्चित्य वर्धमानपुरं गत्वा तत्र वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः । अथार्धपथे गच्छतस्तस्य कदाचिदटव्यां पर्यटतो भगवान्रविरस्तमुपागतः । तत्र च व्यालभयात्स्थूलतरवटस्कन्ध आरुह्य प्रसुप्तो यावत्तिष्ठति तावन्निशीथे द्वौ पुरुषौ रौद्राकारौ परस्परं जल्पन्तावशृणोत् । तत्रैक आह । भोः कर्तः त्वं किं सम्यङ्न वेत्सि यदस्य सोमिलकस्य भोजनाच्छादनादृतेधिका समृद्धिर्नास्ति । तत्किं त्वयास्य सुवर्णशतत्रयं दत्तम् । स आह । भोः कर्मन् मयावश्यं दातव्यं व्यवसायिनां तत्र च तस्य परिणतिस्त्वदायत्तेति ।

अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिमवलोकयति तावद्रिक्तं पश्यति । ततः साक्षेपं चिन्तयामास । अहो किमेतत् । महता कष्टेनोपार्जितं वित्तं हेलया क्वापि गतम् । व्यर्थश्रमोकिंचनः कथं स्वपत्न्या मित्राणां च मुखं दर्शयिष्यामि । इति निश्चित्य तदेव पत्तनं गतः । तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोपि स्वस्थानं प्रति प्रस्थितः । यावदर्धपथे भूयोटवीगतस्य भगवान्भानुरस्तं-

जगामाथ सुवर्णनाशभयात्सुश्रान्तोपि न विश्राम्यति केवलं कृतगृहोत्कण्ठः सत्वरं व्रजति । अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ च शृणोति । तत्रैकः प्राह । भोः कर्तः किं त्वयैतस्य सुवर्णशतपञ्चकं दत्तम् । तत्किं न वेत्सि यद्भोजनाच्छादनाभ्यधिकमस्य किंचिन्नास्ति । स आह । भोः कर्मन् मयावश्यं देयं व्यवसायिनाम् । तस्य परिणामस्त्वदायत्तः । तत्किं मामुपालम्भयसि । तच्छ्रुत्वा सोमिलको यावद्ग्रन्थिमवलोकयति तावत्सुवर्णं नास्ति । ततः परं दुःखमापन्नो व्यचिन्तयत् । अहो किं मम धनरहितस्य जीवितेन । तदत्र वटवृक्ष आत्मानमुद्बध्य प्राणांस्त्यजामि । एवं निश्चित्य दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायामात्मानं निबध्य यावत्प्रक्षिपति तावदेकः पुमानाकाशस्थ एवेदमाह । भो भोः सोमिलक मैवं साहसं कुरु । अहं ते वित्तापहारको न ते भोजनाच्छादनाभ्यधिकं वराटिकामपि सहामि । तद्गच्छ स्वगृहं प्रति । अन्यच्च त्वदीयसाहसेनाहं तुष्टः । तथा मे न स्याद्व्यर्थं दर्शनम् । तत्प्रार्थ्यतामभीष्टो वरः कश्चित् । सोमिलक आह । यद्येवं तद्देहि मे प्रभूतं धनम् । स आह । भोः किं करिष्यसि भोगरहितेन धनेन यतस्तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति । उक्तं च ।

किं तया क्रियते लक्ष्म्या या वधूरिव केवला ।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ १३४ ॥

सोमिलक आह । यद्यपि भोगो नास्ति तथापि भवतु मे धनम् । उक्तं च ।

कृपणोऽप्यकुलीनोपि सदा संश्रितमानुषैः ।
सेव्यते स नरो लोके यस्य स्याद्वित्तसंचयः ॥ १३५ ॥

तथा च ।

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १३६ ॥

पुरुष आह । किमेतत् । सोऽब्रवीत् ।

## कथा ८.

कस्मिंश्चिदधिष्ठाने तीक्ष्णविषाणो नाम महावृषभो वसति । स च मदातिरेकात्परित्यक्तनिजयूथः शृङ्गाभ्यां नदीतटानि विदारयन्स्वेच्छया मरकतसदृशानि शष्पाणि भक्षयन्नरण्यचरो बभूव । अथ तत्रैव वने प्रलोभको नाम शृगालः प्रतिवसति स्म । स कदाचित्स्वभार्यया सह नदीतीरे सुखोपविष्टस्तिष्ठति । अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव पुलिनमवतीर्णः । ततश्च तस्य लम्बमानौ वृषणावालोक्य शृगाल्या शृगालोऽभिहितः । स्वामिन् पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ । ततः क्षणेन प्रहरेण वा पतिष्यतः । एवं ज्ञात्वा भवता पृष्ठयायिना भाव्यम् । शृगाल आह । प्रिये न ज्ञायते कदाचिदेतयोः पतनं भविष्यति वा न वा । तत्किं वृथा श्रमाय मां नियोजयसि । अत्रस्थस्तावज्जलार्थमागतान्मूषकान्भक्षयिष्यामि समं त्वया मार्गोऽयं यतस्तेषाम् । अथ यदा त्वां मुक्त्वास्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि तदागत्यान्यः कश्चिदेतत्स्थानं समाश्रयिष्यति । नैतद्युज्यते कर्तुम् । उक्तं च ।

> यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
> ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ १३७ ॥

शृगाल्याह । भोः कापुरुषस्त्वं यत्किंचित्प्राप्तं तेनापि संतोषं करोषि । उक्तं च ।

> सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः ।
> सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १३८ ॥

तस्मात्पुरुषेण सदैवोत्साहवता भाव्यम् । उक्तं च ।

> यत्रोत्साहसमारम्भो यत्रालस्यविनिग्रहः ।
> नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १३९ ॥

> तद्दैवमिति संचिन्त्य त्यजेन्नोद्योगमात्मनः ।
> अनुद्योगेन नो तैलं तिलेभ्योऽपि हि जायते ॥ १४० ॥

अन्यच्च ।

यः स्तोकेनापि संतोषं कुरुते मन्दधीर्जनः ।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ १४१ ॥

यच्च त्वं वदसि । एतौ पतिष्यतो न वेति । तदप्ययुक्तम् । उक्तं च ।

कृतनिश्चयिनो वन्द्यास्तुङ्गिमा नोपभुज्यते ।
चातकः को वराकोयं यस्येन्द्रो वारिवाहकः ॥ १४२ ॥

अपरं मूषकमांसस्य निर्विण्णाहम् । एतौ च मांसपिण्डौ पतनप्रायौ दृश्येते । तत्सर्वथा नान्यथा कर्तव्यमिति । अथासौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णविषाणस्य पृष्ठमन्वगच्छत् । अथवा साध्विदमुच्यते ।

तावत्स्यात्सर्वकृत्येषु पुरुषोत्र स्वयं प्रभुः ।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ध्रियते बलात् ॥ १४३ ॥

अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ १४४ ॥

एवं स तस्य पृष्ठतः सभार्यः परिभ्रमंश्चिरकालमनयत् । न च तयोः पतनमभूत् । ततश्च निर्वेदात्पञ्चदशे वर्षे शृगालः स्वभार्यामाह ।

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १४५ ॥

तयोस्तत्पश्चादपि पातो न भविष्यति । तत्तदेव स्वस्थानं गच्छावः । अतोहं ब्रवीमि ।

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १४६ ॥

पुरुष आह । यद्येवं तद्गच्छ भूयोपि वर्धमानपुरम् । तत्र द्वौ वणिक्पुत्रौ वसतः । एको गुप्तधनः । द्वितीय उपभुक्तधनः । ततस्तयोः स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः । यदि ते धनेन प्रयोजनमभक्षितेन ततस्त्वामपि गुप्तधनं करोमि । अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमीति । एवमुक्त्वादर्शनं गतः । सोमिलकोपि वि-

स्मितमना भूयोपि वर्धमानपुरं गतः । अथ संध्यासमये श्रान्तः कथमपि तत्पुरं प्राप्तो गुप्तधनगृहं पृच्छन्कृच्छ्राल्लब्ध्वास्तमितसूर्ये प्रविष्टः । अथासौ भार्यापुत्रसमेतेन गुप्तधनेन निर्भर्त्स्यमानो हठाद्गृहं प्रविश्योपविष्टः । ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किंचिदशनं दत्तम् । ततश्च भुक्त्वा तत्रैव यावत्सुप्तो निशीथे पश्यति तावत्तात्रपि द्वौ पुरुषौ परस्परं मन्त्रयतः । तत्रैक आह । भोः कर्तः किं त्वयास्य गुप्तधनस्यान्योधिको व्ययो निर्मितो यत्सोमिलकस्यानेन भोजनं दत्तम् । तदयुक्तं त्वया कृतम् । स आह भोः कर्मन् न ममात्र दोषः । मया पुरुषस्य लाभप्राप्तिर्दातव्या । तत्परिणतिः पुनस्त्वदायत्तेति । अथासौ यावदुत्तिष्ठति तावद्गुप्तधनो विसूचिकया खिद्यमानो रुजाभिभूतः क्षणं तिष्ठति । ततो द्वितीयेह्नि तद्दोषेण कृतोपवासः संजातः । सोमिलकोपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहं गतः । तेनापि चाभ्युत्थानादिना सत्कृतो विहितभोजनाच्छादनसंमानस्तस्यैव गृहे भव्यशय्यामारुह्य सुष्वाप । ततश्च निशीथे यावत्पश्यति तावत्तावेव द्वौ पुरुषौ मिथो मन्त्रयतः । अत्र तयोरेक आह । भोः कर्तः अनेन सोमिलकस्योपकारं कुर्वता प्रभूतो व्ययः कृतः । तत्कथय कथमस्योद्धारकविधिर्भविष्यति । अनेन सर्वमेतद्व्यवहारकगृहात्समानीतम् । स आह । भोः कर्मन् मम कृत्यमेतत् । परिणतिस्त्वदायत्तेति । अथ प्रभातसमये राजपुरुषो राजप्रसादजं वित्तमादाय समायात उपभुक्तधनाय समर्पयामास । तद्दृष्ट्वा सोमिलकश्चिन्तयामास । संचयरहितोपि वरमेष उपभुक्तधनो नासौ गुप्तधनः । उक्तं च ।

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ १४७ ॥

तद्विधाता मां दत्तभुक्तधनं करोतु । न कार्यं मे गुप्तधनेन । ततः सोमिलको दत्तभुक्तधनः संजातः । अतोहं ब्रवीमि ।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १४८ ॥

तद्भद्र हिरण्यक एवं ज्ञात्वा धनविषये संतापो न कार्यः । अथ विद्यमानमपि धनं भोज्यबन्ध्यतया तदविद्यमानं मन्तव्यम् । उक्तं च ।

गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ १४९ ॥

तथा च ।

उपार्जितानामर्थानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परिवाह इवाम्भसाम् ॥ १५० ॥

अन्यच्च ।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १५१ ॥

एवं ज्ञात्वा विवेकिना न स्थित्यर्थं वित्तोपार्जनं कर्तव्यं यतो दुःखाय तत् । उक्तं च ।

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १५२ ॥
पीयूषमिव संतोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसंतोषवतां पुनः ॥ १५३ ॥
निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैः संछन्नाः स्युर्गभस्तयः ॥ १५४ ॥
वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्तते नार्थैः पिपासेवाग्निसेवनैः ॥ १५५ ॥
अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ॥ १५६ ॥
धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १५७ ॥

दानेन तुल्यो विधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति परः पृथिव्याम् ।

विभूषणं शीलसमं न चान्यत्
संतोषतुल्यं धनमस्ति नान्यत् ॥ १५८ ॥
दारिद्र्यस्य परा मूर्तिर्यन्मानद्रविणाल्पता ।
जरद्गवधनः शर्वस्तथापि परमेश्वरः ॥ १५९ ॥

एवं ज्ञात्वा भद्र त्वया संतोषः कार्य इति । मन्थरकवचनमाकर्ण्य वायस आह । भद्र मन्थरको यदेवं वदति तत्त्वया चित्ते कर्तव्यम् । अथवा साध्विदमुच्यते ।

सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १६० ॥
अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः ॥ १६१ ॥

अथैवं जल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः । अथायान्तं ससंभ्रममवलोक्य लघुपतनको वृक्षमारूढः । हिरण्यकः शरस्तम्बं प्रविष्टः । मन्थरकः सलिलाशयमास्थितः । अथ लघुपतनको मृगं सम्यक्परिज्ञाय मन्थरकमुवाच । एह्येहि सखे मन्थरक मृगोयं तृषार्तोत्र समायातः सरसि प्रविष्टः । तस्य शब्दोयं न मानुषसंभव इति । तच्छ्रुत्वा मन्थरको देशकालोचितमाह । भो लघुपतनक यथायं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या पृष्ठतोवलोकयति तन्न तृषार्त एष नूनं लुब्धकत्रासितः । तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वेति । उक्तं च ।

भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः ।
दिशोवलोकयत्येव न स्वास्थ्यं व्रजति क्वचित् ॥ १६२ ॥

तच्छ्रुत्वा चित्राङ्ग आह । भो मन्थरक ज्ञातं त्वया सम्यङ्मे त्रासकारणम् । अहं लुब्धकशरप्रहारादुद्धारितः कृच्छ्रेणात्र समायातः । मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति । तच्छरणागतस्य मे दर्शय किंचिदगम्यं स्थानं लुब्धकानाम् । तदाकर्ण्य मन्थरक आह । भोश्चित्राङ्ग श्रूयतां नीतिशास्त्रम् ।

द्वावुपायाविह मोक्षौ विमुक्तौ शत्रुदर्शने ।
हस्तयोश्चालनादेको द्वितीयः पादवेगजः ॥ १६३ ॥

तद्गम्यतां शीघ्रं घनं वनं यावदद्यापि नागच्छन्ति ते दुरात्मानो लुब्धकाः । अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच । भो मन्थरक गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः । तच्चित्राङ्ग त्वं विश्रब्धो जलाद्बहिर्भव । ततस्ते चत्वारोपि मित्रभावमाश्रितास्तस्मिन्सरसि मध्याह्नसमये वृक्षच्छायाधस्तात्सुभाषितगोष्ठीसुखमनुभवन्तः सुखेन कालं नयन्ति । अथवा युक्तमेतदुच्यते ।

सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकम् ।
विनापि संगमं स्त्रीणां कवीनां सुखमेधते ॥ १६४ ॥

तथा च ।

सक्तुदुक्तं न गृह्णाति स्वयं वा न करोति यः ।
यस्य संपुटिका नास्ति कुतस्तस्य सुभाषितम् ॥ १६५ ॥

अथैकस्मिन्नहनि गोष्ठीसमये मृगो नायातः । अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः । अहो किमद्य सुहृन्न समायातः । किं सिंहादिभिः क्वचिद्व्यापादित उत लुब्धकैरथवानले प्रपतितो गर्ताविषमे वा नवतृणलौल्यादिति । अथवा साध्विदमुच्यते ।

स्वगृहोद्यानगतेपि स्निग्धैः पापं विशङ्क्यते मोहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥ १६६ ॥

अथ मन्थरको वायसमाह । भो लघुपतनक अहं हिरण्यकश्च तावद्द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात् । तद्गत्वा त्वमरण्यं शोधय यदि कुत्रचित्तं जीवन्तं पश्यसीति । तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत्पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति । तं दृष्ट्वा शोकव्याकुलितमनास्तमवोचत् । भद्र किमिदम् । चित्राङ्गोपि वायसमवलोक्य विशेषेण दुःखितमना बभूव ।

अथवा युक्तमेतत् ।

अपि मन्दत्वमापन्नो नष्टो वापीष्टदर्शनात् ।
प्रायेण प्राणिनां भूयो दुःखावेगोधिको भवेत् ॥ १६७ ॥

ततश्च वाष्पावसाने चित्राङ्गो लघुपतनकमाह । भो मित्र संजातोयं तावन्मम मृत्युः । तद्युक्तं संपन्नं यद्भवता सह मे दर्शनं संजातम् । उक्तं च ।

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
तद्द्वाभ्यां सुखदं पश्चाज्जीवतोपि मृतस्य च ॥ १६८ ॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ ।

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
मया तत्क्षम्यतामद्य द्वाभ्यामपि प्रसादतः ॥ १६९ ॥

तच्छ्रुत्वा लघुपतनक आह । भद्र न भेतव्यमस्मद्विधैर्मित्रैर्विद्यमानैः । यावदहं द्रुततरं हिरण्यकं गृहीत्वागच्छामि अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तं च ।

संपदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ १७० ॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान्। हिरण्यकं च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोपि सत्वरं चित्राङ्गसमीपे गतः । सोपि मूषकमवलोक्य किञ्चिज्जीविताशया संश्लिष्ट आह ।

आपन्नाशाय विबुधैः कर्तव्याः सुहृदोमलाः ।
न तरत्यापदं कश्चिद्योत्र मित्रविवर्जितः ॥ १७१ ॥

हिरण्यक आह । भद्र त्वं तावन्नीतिशास्त्रज्ञो दक्ष इति । तत्कथमत्र कूटपाशे पतितः । स आह । भो न कालोयं विवादस्य तन्न यावत्स पापात्मा लुब्धकः समभ्येति तावद्द्रुततरं कर्तयेमं मत्पादपाशम् । तदाकर्ण्य विहस्याह हिरण्यकः । किं मय्यपि समायाते लुब्धकाद्बिभेषि ।

ततः शास्त्रं प्रति महती मे विरक्तिः संपन्ना यद्भवद्विधा अपि नीतिशास्त्रविद एतामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि । स आह । भद्र कर्मणा बुद्धिरपि हन्यते । उक्तं च ।

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १७२ ॥
विधात्रा रचिता या सा ललाटेक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वशक्त्याप्यतिपण्डिताः ॥ १७३ ॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसंतप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह । अहो न शोभनमापतितम् । हिरण्यक आह । किं स लुब्धकः समायाति । स आह । आस्तां तावल्लुब्धकवार्त्ता । एष मन्थरकः समागच्छति । तदनीतिरनुष्ठितानेन यतो वयमप्यस्य कारणान्नूनं व्यापादनं यास्यामो यदि स पापात्मा लुब्धकः समागमिष्यति । तदहं तावत्खमुत्पतिष्यामि । त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि । चित्राङ्गोपि वेगेन दिगन्तरं यास्यति । एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोस्मि । अत्रान्तरे प्राप्तोयं मन्थरकः । हिरण्यक आह । भद्र न युक्तमनुष्ठितं भवता यदत्र समायातः । तद्भूयोपि द्रुततरं गम्यतां यावदसौ लुब्धको न समायाति । मन्थरक आह भद्र किं करोमि । न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाघं सोढुम् । तेनाहमत्रागतः । अथवा साध्विदमुच्यते ।

दयितजनविप्रयोगो वित्तवियोगश्च केन सह्याः स्युः ।
यदि सुमहौषधकल्पो वयस्यजनसंगमो न स्यात् ॥ १७४ ॥

एवं तस्य प्रवदत आकर्णपूरितशरासनो लुब्धकोप्युपागतः । तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात्खण्डितः । अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन्प्रधावितः । लघुपतनको वृक्षमारूढः । हिरण्यकश्च समीपवर्ति बिलं प्रविष्टः । अथासौ लुब्धको मृगगमनाद्विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दंमन्दं स्थलमध्ये गच्छन्तं दृष्टवान् । अचिन्तयच्च । यद्यपि कुरंगो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं

संपादितः । तदद्यास्यामिषेण मे कुटुम्बस्याहारनिर्वृत्तिर्भविष्यति । एवं विचिन्त्य तं दर्भैः संछाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः । अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्यदेवयत् । कष्टं भोः कष्टमापतितम् ।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १७५ ॥

यदि तावत्कृतान्तेन मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम् । अपरमपि मित्रं परं मन्थरकसमं न स्यात् । उक्तं च ।

असंपत्तौ परो लाभो गुह्यस्य कथनं तथा ।
आपद्विमोक्षणं चैव मित्रस्यैतत्फलत्रयम् ॥ १७६ ॥

तदस्य पश्चान्नान्यः सुहृन्मे । तत्किं ममोपर्यनवरतं व्यसनशरैर्वर्षति हन्त विधिः । यत आदौ तावद्वित्तनाशस्ततः परिवारभ्रंशस्ततो देशत्यागस्ततो मित्रवियोग इति । अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्मस्य । उक्तं च ।

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादभङ्गुरम् ॥ १७७ ॥

तथा च ।

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १७८ ॥

अहो साधूक्तं केनापि ।

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १७९ ॥

अत्रान्तर आक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ। अथ हिरण्यक आह। अहो किं वृथाप्रलपितेन। तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते तावदस्य मोक्षोपायश्चिन्त्यतामिति। उक्तं च।

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत्।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति॥ १८०॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम्॥ १८१॥

अन्यच्च।

अतीतलाभस्य च रक्षणार्थं
भविष्यलाभस्य च संगमार्थम्।
आपत्प्रपन्नस्य च मोक्षणार्थं
यन्मन्त्र्यतेसौ परमो हि मन्त्रः॥ १८२॥

तच्छ्रुत्वा वायस आह। भो यद्येवं तत्क्रियतां मद्वचः। एष चित्राङ्गोस्य मार्गे गत्वा किंचित्पल्वलमासाद्य तस्य तीरे निश्चेतनो भूत्वा पततु। अहमप्यस्य शिरसि समारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लेखिष्यामि येनासौ लुब्धकोमुं मृतं मत्वा मम चञ्चुप्रहारप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थे धावति। अत्रान्तरे त्वया दर्भमयबन्धनवेष्टनानि खण्डनीयानि येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति। चित्राङ्गः प्राह। भो भद्रोयं दृष्टो मन्त्रस्त्वया। नूनं मन्थरको मुक्तो मन्तव्यः। उक्तं च।

सिद्धिं वा यदि वासिद्धिं चित्तोत्साहो निवेदयेत्।
प्रथमं सर्वजन्तूनां प्राज्ञो वेत्ति न चेतरः॥ १८३॥

तत्तदेवं क्रियताम्। तथानुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमद्राक्षीत्। तं दृष्ट्वा हर्षितमना व्यचिन्तयत्। नूनं पाशवेदनया वराकोयं मृगः सावशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं प्रविष्टो यावन्मृतः। तद्वश्योयं मे कच्छपः सुयन्त्रितत्वात्। तदेनमपि तावद्गृह्णामीत्यवधार्य कच्छपं भूतले

प्रक्षिप्य मृगमुपाद्रवत्। अत्रान्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहारेण तद्दर्भवेष्टनं तत्क्षणात्खण्डशः कृतम्। मन्थरकोपि तृणमध्यान्निष्क्रम्य पल्वलं प्रविष्टः। चित्राङ्गोप्यप्राप्तस्यापि तस्योत्थाय वायसेन सह द्रुतं प्रनष्टः। अत्रान्तरे विलक्षो विषादपरो निवृत्तो लुब्धको यावत्पश्यति तावत्कच्छपोपि गतः। ततश्च तत्रोपविश्येमं श्लोकमपठत्।

प्राप्तो बन्धनमप्ययं गुरु मृगस्तावत्त्वया मे हृतः
संप्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः।
क्षुत्क्षामोत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया
यत्स्वामिन्न कृतं कृतान्त कुरु रे तत्रापि सज्जोस्म्यहम्॥ १८४॥

एवं बहुविधं विलप्य स्वगृहं गतः। अथ तस्मिन्दूरीभूते सर्वेपि ते काककूर्ममृगाखवः परमानन्दभाजो मिलित्वा परस्परमालिङ्ग्य पुनर्जातानिवात्मनो मन्यमानास्तदेव सरः प्राप्य महासुखेन सुभाषितगोष्ठीविनोदं कुर्वन्तः कालं नयन्ति स्म। एवं ज्ञात्वा विवेकिना मित्रसंग्रहः कार्यः। तथा मित्रेण सहाव्याजेन वर्तितव्यम्। उक्तं च।

यो मित्राणि करोत्यत्र कौटिल्येन न वर्तते।
स दुःखं न पराभूतः प्राप्नोति हि कथंचन॥ १८५॥

॥ समाप्तं चेदं मित्रसंप्राप्त्यभिधानं द्वितीयं तन्त्रम्॥

अथेदमारभ्यते काकोलूकीयं नाम तृतीयं तन्त्रं यस्यायमादिमः श्लोकः ।

न विश्वसेत्पूर्वविरोधितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्य उलूकपूर्णां
काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य समीपेनेकखगसनाथोतिघनतरपत्त्रच्छन्नो महान्न्यग्रोधपादपस्तिष्ठति । तत्र च मेघवर्णो नाम वायसराजोनेककाकपरिवारः प्रतिवसति स्म । स तत्र विहितदुर्गरचनः सपरिजनः कालं नयति । अथान्योरिमर्दनो नामोलूकराजोसंख्योलूकपरिवृतो गिरिगुहादुर्गाश्रयः प्रतिवसति स्म । स च रात्रावागत्य तस्य न्यग्रोधस्य समन्तात्परिभ्रमति । यं कंचिद्वायसमासादयति तं व्यापादयति । एवं नित्याभिगमनाच्छनैः शनैस्तन्न्यग्रोधपादपदुर्गं निर्वायसं कृतम् । अथवा भवत्येवम् । यतः ।

य उपेक्षेत शत्रुं स्वं प्रचरन्तं यदृच्छया ।
रोगं वालस्यसंयुक्तः स शनैस्तेन हन्यते ॥ २ ॥

तथा च ।

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत् ।
महाबलोपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ ३ ॥

अथान्येद्युः स वायसराजः सर्वान्सचिवानाहूय प्रोवाच । भो उत्कटस्तावदस्माकं शत्रुरुद्यमसंपन्नश्च कालविन्नित्यमेव निशागमे समेत्य व्यापादनं करोति । तत्कथमस्य प्रतिविधातव्यम् । वयं तावद्रात्रौ न पश्यामो न च तस्य दुर्गं विजानीमो येन गत्वा प्रहरामः । तदत्र किं युज्यते संधिविग्रहयानासनसंश्रयद्वैधीभावानामेकतमस्य क्रियमाणस्य । अथ ते प्रोचुः । युक्तमभिहितं देवेन यदेष प्रश्नः कृतः । उक्तं च ।

अपृष्टेनापि वक्तव्यं सचिवेनात्र किंचन ।
पृष्टेन त्वरितं पथ्यं वाच्यं च प्रियमप्रियम् ॥ ४ ॥
यो न पृष्टो हितं ब्रूते परिणामे सुखावहम् ।
मन्त्री च प्रियवक्ता च केवलं स रिपुः स्मृतः ॥ ५ ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ६ ॥
तस्मादेकान्तमासाद्य मन्त्रः कार्यो महीपते ।
येन तस्य वयं कुर्मो नियमं कारणं तथा ॥ ७ ॥

अथ तस्यान्वयागताः पञ्च सचिवाः । तद्यथा नामानि । उज्जीवी संजीव्यनुजीवी प्रजीवी चिरंजीवी च । स तेषामादौ तावदुज्जीविनं पृष्टवान् । भद्र एवं स्थिते किं मन्यते भवान् । स आह । राजन् बलवता सह विग्रहो न कार्यः । यतः स बलवान्कालप्रहर्ता च तस्मात्संधेयः । उक्तं च ।

बलीयसि प्रणमतां काले प्रहरतामपि ।
संपदो नापगच्छन्ति प्रतीप इव निम्नगाः ॥ ८ ॥
सत्याढ्यो धार्मिकश्चार्यो भ्रातृसंघातवान्बली ।
अनेकविजयी चैव संधेयः स रिपुर्भवेत् ॥ ९ ॥
संधिः कार्योऽप्यनार्येण विज्ञाय प्राणसंशयम् ।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितम् ॥ १० ॥

योनेकयुद्धविजयी स तेन विशेषात्संधेयः । उक्तं च ।

अनेकयुद्धविजयी संधानं यस्य गच्छति ।
तत्प्रभावेन तस्याशु वशमायान्त्यरातयः ॥ ११ ॥
संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि ।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः ॥ १२ ॥
संदिग्धो विजयो नित्यं वृतेनापि हि युद्धचताम् ।
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत् ॥ १३ ॥

असंदधानो मानान्धः समेनापि हतो भृशम् ।
आमकुम्भ इवान्येन करोत्यभयसंक्षयम् ॥ १४ ॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे ।
दृषत्कुम्भमिवाभित्त्वा तावत्तिष्ठति शक्तिमान् ॥ १५ ॥
भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥ १६ ॥
खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् ।
प्राप्नोति नखभङ्गं हि फलं वा मूषको भवेत् ॥१७॥
तस्मान्न स्यात्फलं यत्र पुष्टं युद्धं च केवलम् ।
न हि तत्स्वयमुत्पाद्यं कर्तव्यं च कथंचन ॥ १८ ॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाश्रयेत् ।
वाञ्छन्नभ्रंशिनीं लक्ष्मीं न मौजंगीं कदाचन ॥ १९ ॥
कुर्वन्हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम् ।
भुजंगवृत्तिः प्राप्नोति वधमेव हि केवलम् ॥ २० ॥
कूर्मसंकोचमास्थाय प्रहारानपि मर्षयेत् ।
कालेकाले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥ २१ ॥
आगतं विग्रहं दृष्ट्वा सुसाम्ना प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसा न समुत्पतेत् ॥ २२ ॥

तथा च ।

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ २३ ॥

एवमुज्जीवी साममन्त्वं संधिकारकं विज्ञप्तवान् । अथ तच्छ्रुत्वा संजीविनमाह । भद्र तवाभिप्रायं श्रोतुमिच्छामि । स आह । देव न ममैतत्प्रतिभाति यच्छत्रुणा सह संधानं क्रियते । उक्तं च ।

शत्रुणा न हि संदध्यात्सुश्लिष्टेनापि संधिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ २४ ॥

अपरं च स क्रूरो लुब्धो धर्मरहितः तत्त्वया विशेषादसंधेयः ।

उक्तं च ।

सत्यधर्मविहीनेन न संदध्यात्कथंचन ।
सुसंधितोप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ २५ ॥

तस्मात्तेन योद्धव्यमिति मे निश्चयः । उक्तं च ।

क्रूरो लुब्धोलसोसत्यः प्रमादी भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखोच्छेद्यो भवेद्रिपुः ॥ २६ ॥

अपरं पराभूतास्तेन वयम् । तद्यदि संधानं करिष्यथ तद्भूयोपि काकविनाशं करिष्यति । उक्तं च ।

चतुर्थोपायसाध्ये तु शत्रौ सान्त्वमपक्रिया ।
स्वेद्यमानज्वरं प्राज्ञः कोम्भसा परिषिञ्चति ॥ २७ ॥
सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।
सुतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ २८ ॥

यश्चैतद्वदति देवो रिपुर्बलवांस्तदप्यकारणम् । उक्तं च ।

प्रमाणाभ्यधिकस्यापि महत्सत्त्वमधिष्ठितः ।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ २९ ॥
उत्साहशक्तिसंपन्नो हन्याच्छत्रुं लघुर्गुरुम् ।
यथा कण्ठीरवो नागं भारद्वाजाः प्रचक्षते ॥ ३० ॥
मायया शत्रवो वध्या अधिकाः स्युर्बलेन ये ।
यथा स्त्रीरूपमास्थाय हता भीमेन कीचकाः ॥ ३१ ॥

तथा च ।

मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः ।
सर्वंसहं तु मन्यन्ते तृणाय रिपवश्च तम् ॥ ३२ ॥
न जातु शमनं यस्य तेजस्तेजस्वितेजसाम् ।
वृथाजातेन किं तेन मातुर्यौवनहारिणा ॥ ३३ ॥
या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः ।
कान्तापि मनसः प्रीतिं न सा धत्ते मनस्विनाम् ॥ ३४ ॥

रिपुरक्तेन संसिक्ता तत्स्त्रीनेत्राम्बुभिस्तथा ।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीविते ॥ ३५ ॥

एवं संजीवी विग्रहमन्त्रं विज्ञापयामास । अथ तच्छ्रुत्वानुजीविनमाह । भद्र त्वमपि स्वाभिप्रायं वद । स आह । देव दुष्टः स बलाधिको निर्मर्यादश्च । तत्र तेन न संधिर्न विग्रहो युक्तः ॥ केवलं यानमर्हं स्यात् । उक्तं च ।

बलोत्कृष्टेन दुष्टेन मर्यादारहितेन च ।
न संधिर्विग्रहो नैव विना यानं प्रशस्यते ॥ ३६ ॥
द्विधाकारं भवेद्यानं भये प्राणार्थरक्षणम् ।
एकमन्यज्जिगीषोश्च यात्रालक्षणमुच्यते ॥ ३७ ॥
कार्त्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते ।
यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥ ३८ ॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्तिताः ।
व्यसने वर्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३९ ॥
स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः ।
परदेशं ततो गच्छेत्प्रणिधिव्याप्तमग्रतः ॥ ४० ॥
अज्ञातवीवधासारतोयसस्यो व्रजेत्तु यः ।
परराष्ट्रं न भूयः स स्वराष्ट्रमपि गच्छति ॥ ४१ ॥

तत्ते युक्तं कर्तुमपसरणम् । अन्यच्च ।

तत्र युक्तं प्रभो कर्तुं द्वितीयं यानमेव च ।
न विग्रहो न संधानं बलिना तेन पापिना ॥ ४२ ॥

अपरं कारणापेक्षयापसरणं क्रियते बुधैः । उक्तं च ।

यदपसरति मेषः कारणं तत्प्रहर्तुं
मृगपतिरतिकोपात्संकुचत्युत्पतिष्णुः ।
हृदयनिहितभावा गूढमन्त्रप्रचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ४३ ॥

अन्यच्च ।

बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः ।
युधिष्ठिर इवाप्नोति पुनर्जीवन्स मेदिनीम् ॥ ४४ ॥
युध्यतेहंकृतिं कृत्वा दुर्बलो यो बलीयसा ।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयम् ॥ ४५ ॥

तद्बलवताभियुक्तस्यापसरणसमयोयं न संधिर्विग्रहश्च । एवमनुजीविमन्त्रोपसरणस्य । अथैतदाकर्ण्य प्रजीविनमाह । भद्र त्वमप्यात्मनोभिप्रायं वद । स आह । देव मम संधिविग्रहयानान्यपि त्रीण्येव न प्रतिभान्ति विशेषतश्चासनम् ।

उक्तं च ।

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥ ४६ ॥

अन्यच्च ।

अभियुक्तो बलवता दुर्गे तिष्ठेत्प्रयत्नवान् ।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये ॥ ४७ ॥
यो रिपोरागमं श्रुत्वा भयसंत्रस्तमानसः ।
स्वस्थानं हि त्यजेत्तत्र न तु भूयो विशेच्च सः ॥ ४८ ॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
स्थानहीनस्तथा राजा गम्यः स्यात्सर्वजन्तुषु ॥ ४९ ॥
निजस्थानस्थितोप्येकः शतं योद्धुं सहेन्नरः ।
बलिनामपि शत्रूणां तस्मात्स्थानं न संत्यजेत् ॥ ५० ॥
तस्माद्दुर्गं दृढं कृत्वा वीवधासारसंयुतम् ।
प्राकारपरिखायुक्तं यन्त्रादिभिरलंकृतम् ॥ ५१ ॥
तिष्ठेन्मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन्संप्राप्स्यति राज्यं मृतो वा स्वर्गमेष्यति ॥ ५२ ॥

अन्यच्च ।

बलिनापि न बाध्यन्ते लघवोप्येकसंश्रयाः ।
प्रभञ्जनविपक्षेण यथैकस्था महीरुहाः ॥ ५३ ॥
महानप्येकजो वृक्षः सर्वतः सुप्रतिष्ठितः ।
सुमन्देनापि वातेन शक्यो धूनयितुं यतः ॥ ५४ ॥
एवं मनुष्यमप्येकं शौर्येणापि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम् ॥ ५५ ॥

एवं प्रजीविमन्त्रः । इदमासनसंज्ञकम् । एतत्समाकर्ण्य चिरंजीविनमाह । भद्र त्वमपि स्वाभिप्रायं वद । स आह । देव षाड्गुण्यमध्ये मम संश्रयः प्रतिभाति । तस्यानुष्ठानं कार्यम् । उक्तं च ।

असहायः समर्थोपि तेजस्वी किं करिष्यति ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ ५६ ॥

तदत्रैव स्थितेन त्वया कश्चित्समर्थ आश्रयणीयो यो विपत्प्रतीकारं करोति । यदि पुनस्त्वं तव स्थानं त्यक्त्वा प्रयास्यसि तत्कोपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति । उक्तं च ।

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति गौरवम् ॥ ५७ ॥

अथवा नैष एकान्तो यद्बलिनमेकं समाश्रयेत् । लघूनामपि संश्रयो रक्षायै भवति । उक्तं च ।

संघातवान्यथा वेणुर्निबिडैर्वेणुभिर्वृतः ।
न शक्यते समुच्छेत्तुं दुर्बलोपि तथा नृपः ॥ ५८ ॥
अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः ।
ते न रौद्रानिलेनापि हन्यन्तेन्योन्यसंश्रयात् ॥ ५९ ॥
महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य इव वातेन शक्यः स्यादपि मर्दितुम् ॥ ६० ॥

यदि पुनरुत्तमे संश्रयो भवति तत्किमुच्यते । उक्तं च ।

महाजनस्य संपर्कः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ ६१ ॥

ततः संश्रयं विना न कश्चित्प्रतीकारो भवति । तस्मात्संश्रयात्कार्यो विग्रह इति मेभिप्रायः । एवं चिरंजीविमन्त्रः । अथैवं तेनाभिहिते स मेघवर्णो राजा चिरंतनं पितृसचिवं दीर्घायुषं सकलनीतिपारं गतं स्थिरजीविनामानं प्रणम्य प्रोवाच । तात यद्येते मया पृष्टाः सचिवास्तावदत्र स्थितस्यापि तव तत्परीक्षार्थं येन त्वं सकलं श्रुत्वा यदुचितं तन्मे समादिशसि । तद्यद्युक्तं भवति तत्समादेश्यम् । स आह । वत्स सर्वैरप्येतैर्नीतिशास्त्राश्रयमुक्तं सचिवैः । तदुपयुज्यते स्वकाले । परमेष द्वैधीभावस्य कालः । उक्तं च ।

अविश्वासं सदातिष्ठेत्संधिना विग्रहेण च ।
द्वैधीभावं च संश्रित्य पार्श्वे शत्रोर्बलीयसः ॥ ६२ ॥

तच्छत्रुं विश्वास्याविश्वस्तैर्लोभं दर्शयद्भिः सुखेनोच्छिद्यते रिपुः । उक्तं च ।

उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा ।
गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥ ६३ ॥

तथा च ।

स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः ।
यो भवेदेकभावोत्र न स जीवति मानवः ॥ ६४ ॥
कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा ।
एकभावेन कर्तव्यं शेषं द्विर्भावमाश्रितैः ॥ ६५ ॥
एको भावः सदा शस्तो यतीनां भावितात्मनाम् ।
स्त्रीलुब्धानां न लोकानां विशेषेण महीभृताम् ॥ ६६ ॥

तद्द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति लोभाश्रयाच्च शत्रुमुच्चाटयिष्यसि । अपरं यदि किंचिच्छिद्रं तस्य पश्यसि तद्गत्वा व्यापादयिष्यसि । मेघवर्ण आह । तात मयाविदितः संश्रयस्तस्य ।

त्कथं छिद्रं ज्ञायते तस्य । स्थिरजीव्याह । वत्स न केवलं स्थानं छिद्राण्यपि तस्य प्रकटीकरिष्यामि प्रणिधिभिः । उक्तं च ।

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति वै द्विजाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ६७ ॥

उक्तं चात्र विषये ।

यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः ।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात् ॥ ६८ ॥

मेघवर्ण आह । तात कानि तीर्थान्युच्यन्ते कतिसंख्यानि च । तीदृशा गुप्तचराः । तत्सर्वं निवेद्यतामिति । स आह । अत्र विषये गवता नारदेन युधिष्ठिरः प्रोक्तः । यच्छत्रुपक्षेऽष्टादश तीर्थानि स्वपक्षे ञ्चदश । त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञेयानि । तैर्ज्ञातैः स्वपक्षः परप- श्च वश्यो भवति । उक्तं च नारदेन युधिष्ठिरं प्रति ।

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ६९ ॥

तीर्थशब्देनायुक्तकर्माभिधीयते । तद्यदि तेषां कुत्सितं भवति तत्स्वा- मेनोऽभिघाताय । प्रधानं भवति तद्वृद्धये स्यादिति । तद्यथा । मन्त्री रोहितः सेनापतिर्युवराजो दौवारिकोऽन्तर्वासिकः प्रशासकः समाहर्तृ- निधातृप्रदेष्टृज्ञापकाः साधनाध्यक्षो गजाध्यक्षः कोशाध्यक्षो दुर्गपा- करपालसीमापालप्रोत्कटभृत्याः । एषां भेदेन द्राग्रिपुः साध्यते । वपक्षे च देवी जननी कञ्चुकी मालिकः शय्यापालकः स्पाशः सांव- सरिको भिषग्जलवाहकस्ताम्बूलवाहकाचार्याङ्गरक्षकः स्थानचि- तकश्छत्त्रधरो विलासिनी । एषां वैरद्वारेण स्वपक्षे विघातः । तथा च ।

वैद्यसांवत्सराचार्याः स्वपक्षेधिकृताश्चराः ।
यथाहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु ॥ ७० ॥

तथा च ।

कृत्वा कृत्यविदस्तीर्थैरन्तः प्रणिधयः पदम् ।
विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ ७१ ॥

एवं मन्त्रिवाक्यमाकर्ण्यात्रान्तरे मेघवर्ण आह । तात अथ किंनिमित्तमेवंविधं प्राणान्तिकं सदैव वायसोलूकानां वैरम् । स आह । वत्स कदाचिद्धंसशुकबककोकिलचातकोलूकमयूरकपोतपारावतविष्किरप्रभृतयः सर्वेपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुमारब्धाः । अहो अस्माकं वैनतेयो राजा । स च तावच्छ्रीवासुदेवासक्तो नास्माकं कामपि चिन्तां करोति । तत्किं तेन वृथास्वामिना यो लुब्धकपाशैर्नित्यं निबध्यमानानां न रक्षां विधत्ते । उक्तं च ।

यो न रक्षति वित्रस्तान्पीड्यमानान्परैः सदा ।
जन्तून्पार्थिवरूपेण स कृतान्तो न संशयः ॥ ७२ ॥
यदि न स्यान्नरपतिः सम्यङ्नेता इमाः प्रजाः ।
अकर्णधारा पुरुषा विप्लवन्ते ह नौरिव ॥ ७३ ॥
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ७४ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ७५ ॥

तत्संचिन्त्यान्यः कश्चिद्राजा विहंगमानां क्रियतामिति । अथ तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितम् । यदेष उलूको राजास्माकं भविष्यति । तदानीयन्तां नृपाभिषेकसंबन्धिनः संभारा इति । अथ साधिते विविधतीर्थोदके प्रगुणीकृतेष्टोत्तरशतमूलिकासंघाते प्रदत्ते सिंहासने वर्तिते सप्तद्वीपवतीधरित्रीमण्डले प्रस्तारिते व्याघ्रचर्मण्यापूरितेषु हेमकुम्भेषु दीपेषु वाद्येषु च सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु पठत्सु वन्दिमुख्येषु वेदोच्चारणपरेषु समुदितमुखेषु ब्राह्मणेषु गीतपरे युवतीजन आनीतायामग्रमहिष्यां कृकालिकायामुलूकोभिषेकार्थं यावत्सिंहासन उपविशति तावत्कुतोपि वायसः समायातः । सोचिन्तयत् । अहो किमेष पक्षिमेलापको महोत्सवश्च । अथ ते पक्षिणस्तं दृष्ट्वा मिथः प्रोचुः । पक्षिणां मध्ये वायसश्चतुरः श्रूयते । उक्तं च ।

नराणां नापितो धूर्तः पक्षिणां चैव वायसः ।
दंष्ट्रिणां च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम् ॥ ७६ ॥

तदस्यापि वचनं ग्राह्यम् । उक्तं च ।

बहुधा बहुभिः सार्धं चिन्तिताः सुनिरूपिताः ।
कथंचिन्न विलीयन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ७७ ॥

अथ वायसः समेत्य तानाह । अहो किं महाजनसमागमोयं परममहोत्सवश्च । ते प्रोचुः । भो नास्ति कश्चिद्विहंगानां राजा । तदस्योलूकस्य विहंगराजाभिषेको निरूपितस्तिष्ठति समस्तपक्षिभिः । तत्त्वमपि मतं देहि । प्रस्तावे समागतोसि । अथासौ काको विहस्याह । अहो न युक्तमेतद्यन्मयूरहंसकोकिलचक्रवाकशुकहारीतसारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवान्धस्यास्य करालवक्त्रस्याभिषेकः क्रियते । तन्नैतन्मम मतम् । यतः ।

वक्रनासश्च कर्काक्षो रौद्रश्चाप्रियदर्शनः ।
अक्रुद्धोयं दिवान्धः स्यात्क्रुद्धः कीदृग्भविष्यति ॥ ७८ ॥

तथा च ।

स्वभावरौद्रमत्युग्रं क्रूरमप्रियदर्शनम् ।
उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति ॥ ७९ ॥

अपरं वैनतेये स्वामिनि स्थिते किमेष दिवान्धः स्वामी क्रियते । तद्यद्यपि गुणवान्भवति तथाप्येकस्मिन्स्वामिनि स्थिते नान्यो भूपः प्रशस्यते ।

एक एव हितार्थो यस्तेजस्वी पार्थिवो भुवः ।
युगान्त इव भास्वन्तो बहवोत्र विपत्तये ॥ ८० ॥

तत्तस्य नाम्नापि यूयं परेषामगम्या भविष्यथ । उक्तं च ।

गुरूणां नाममात्रेपि गृहीते स्वामिसंभवे ।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते ॥ ८१ ॥

तथा च ।

व्यपदेशेन महतां सिद्धिः संजायते परा ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥ ८२ ॥

त ऊचुः । कथमेतत् । स आह ।

## कथा १.

अस्ति कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म । तत्र कदाचिन्महत्यनावृष्टिः संजाता प्रभूतवर्षाणि यावत् । तथा तडागह्रदपल्वलसरांसि शोषमुपागतानि । अथ तैः समस्तगजैः स गजराजः प्रोक्तः । देव पिपासाकुला गजकलभा मृतप्राया अपरे मृताश्च । तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति । ततश्चिरं ध्यात्वा तेनाभिहितम् । अस्ति महाह्रदो विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गाजलेन सदैव पूर्णः । तत्तत्र गम्यतामिति । तथानुतिष्ठे पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्रदः । तत्र स्वेच्छया जलमवगाह्यास्तमनवेलायां निष्क्रान्ताः । तस्य च ह्रदस्य समन्ताच्छशकबिला असंख्याः सुकोमलभूमौ तिष्ठन्ति । तेपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भिः परिभग्नाः । बहवः शशका भग्नपादशिरोग्रीवा विहिताः केचिन्मृताः केचिज्जीवशेषा जाताः । अथ गते तस्मिन्गजयूथे शशकाः सोद्वेगा गजपादक्षुण्णसमावासाः केचिद्भग्नपादा अन्ये जर्जरितकलेवरा रुधिरप्लुता अन्ये हतशिशवो बाष्पपिहितलोचनाः समेत्य मिथो मन्त्रं चक्रुः । अहो विनष्टा वयम् । नित्यमेवैतद्गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति । तत्सर्वेषां नाशो भविष्यति । उक्तं च ।

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ ८३ ॥

तच्चिन्त्यतां कश्चिदुपायः । तत्रैकः प्रोवाच । गम्यतां देशत्यागेन । किमन्यत् । उक्तं च मनुना व्यासेन च ।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थ आत्मार्थे पृथिवीं त्यजेत् ॥ ८४ ॥

मनुः

क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥ ८५ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ८६ ॥

ततश्चान्ये प्रोचुः । भोः पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम् । तत्क्रियतां तेषां कृते काचिद्विभीषिका यत्कथमपि दैवान्न समायान्ति । उक्तं च ।

निर्विषेणापि सर्पेण कर्तव्या महती फटा ।
विषं भवतु मा वास्तु फटाटोपो भयंकरः ॥ ८७ ॥

अथान्ये प्रोचुः । यद्येवं ततस्तेषां महद्विभीषिकास्थानमस्ति येन नागमिष्यन्ति । सा च चतुरदूतायत्ता विभीषिका । यतो विजयदत्तो नाम राजास्मत्स्वामी शशकश्चन्द्रमण्डले निवसति तत्प्रेष्यतां कश्चिन्मिथ्यादूतो यूथाधिपसकाशं यच्चन्द्रस्त्वामत्र ह्रद आगच्छन्तं निषेधयति यतोस्मत्परिग्रहोस्य समन्ताद्वसति । एवमभिहिते श्रद्धेयवचनात्कदापि निवर्तते । अथान्ये प्रोचुः । यद्येवं तदस्ति लम्बकर्णो नाम शशकः । स च वचनरचनाचतुरो दूतकर्मज्ञः । स तत्र प्रेष्यतामिति । उक्तं च ।

साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः ।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ८८ ॥

अन्यच्च ।

यो मूर्खं लौल्यसंपन्नं राजद्वारिकमाचरेत् ।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति ॥ ८९ ॥

तदन्विष्यतां यद्यस्माद्व्यसनादात्मनां सुनिर्मुक्तिः । अथान्ये प्रोचुः । अहो युक्तमेतत् । नान्यः कश्चिदुपायोस्माकं जीवितस्य । तथैव क्रिय-

ताम् । अथ लम्बकर्णो गजयूथाधिपसमीपे निरूपितो गतश्च । तथानुष्ठिते लम्बकर्णोपि गजमार्गमासाद्यागम्यं स्थलमारुह्य तं गजमुवाच । भो भो दुष्टगज किमेवं लीलया निःशङ्कतयात्र चन्द्रह्रद आगच्छसि । तन्नागन्तव्यं निवर्त्यतामिति । तदाकर्ण्य विस्मितमना गज आह । भोः कस्त्वम् । स आह । अहं विजयदत्तो नाम शशकश्चन्द्रमण्डले वसामि । सांप्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितस्तस्य वचनस्य श्रद्धेयत्वात् । तच्छ्रुत्वा स आह । भोः शशक तत्कथय भगवतश्चन्द्रमसः संदेशं येन सत्वरं क्रियते । स आह । भवतातीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः । तत्किं न वेत्ति भवान्यन्मम परिग्रहोयम् । तद्यदि जीवितेन ते प्रयोजनं तदा केनापि प्रयोजनेनाप्यत्र ह्रदे नागन्तव्यमिति संदेशः । गज आह । अथ क्व वर्तते भगवान्स्वामी चन्द्रः । स आह । अत्र ह्रदे सांप्रतं शशकानां भवद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति । अहं पुनस्तवान्तिकं प्रेषितः । गज आह । यद्येवं तद्दर्शय मे तं स्वामिनं येन प्रणम्यान्यत्र गच्छामः । शशक आह । भो आगच्छ मया सहैकाकी येन दर्शयामि । तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रबिम्बमदर्शयत् । आह च । भो एष नः स्वामी जलमध्ये समाधिस्थस्तिष्ठति तन्निभृतं प्रणम्य सत्वरं व्रजेति । नो चेत्समाधिभङ्गाद्भूयोपि प्रभूतं कोपं करिष्यति । अथ गजोपि त्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः । शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म । अतोहं ब्रवीमि ।

व्यपदेशेन महतां सिद्धिः संजायते परा ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥ ९० ॥

तथा च ।

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ ९१ ॥

ते प्रोचुः । कथमेतत् । स आह ।

## कथा 2.

अस्ति कस्मिंश्चिद्वृक्षे पुराहं वसामि । तत्राधस्तात्कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायामागतयोर्द्वयोरनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिराजर्षिपुराणचरितकीर्तनेन च पर्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित्कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालिप्रायं देशं गतः । ततो यावन्निशासमयेपि नायातस्तावदहं सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान् । अहो किमद्य कपिञ्जलो नायातः । किं केनापि पाशेन बद्ध उताहोस्वित्केनापि व्यापादितः । सर्वथा यदि कुशली भवति तन्मां विना न तिष्ठति । एवं मे चिन्तयतो बहून्यहानि व्यतिक्रान्तानि । ततश्च तत्र कोटरे कदाचिच्छीघ्रगो नाम शशकोस्तमनवेलायामागत्य प्रविष्टः । मयापि कपिञ्जलनिराशत्वेन न निवारितः । अथान्यस्मिन्नहनि कपिञ्जलः शालिभक्षणादतीव पीवरतनुः स्वमाश्रयं स्मृत्वा भूयोप्यत्रैव समायातः । अथवा साध्विदमुच्यते ।

न तादृग्जायते सौख्यमपि स्वर्गे शरीरिणाम् ।
दरिद्रेपि हि यादृक्स्यात्स्वदेशे स्वपुरे गृहे ॥ ९२ ॥

अथासौ कोटरान्तर्गतं शशकं दृष्ट्वा साक्षेपमाह । भो मदीयमेतद्गृहम् । तच्छीघ्रं निष्क्रम्यताम् । शशक आह । न तवेदं गृहं किंतु ममैव । तत्किं मिथ्या परुषाणि जल्पसि । उक्तं च ।

वापीकूपतडागानां देवालयकुजन्मनाम् ।
उत्सर्गात्परतः स्वाम्यमपि कर्तुं न शक्यते ॥ ९३ ॥

तथा च ।

प्रत्यक्षं यस्य यद्भुक्तं गृहाद्यं दश वत्सरान् ।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि च ॥ ९४ ॥
मानुषाणामयं न्यायो मुनिभिः परिकीर्तितः ।
तिरश्चां च विहंगानां यावच्छिशुसमाश्रयः ॥ ९५ ॥

तन्ममैतद्गृहं न तवेति । कपिञ्जल आह । भो यदि स्मृतं प्रमाणं-

करोषि तदागच्छ मया सह येन स्मृतिपाठकं पृष्ट्वा स यस्य ददाति स गृह्णातु । तथानुष्ठिते मयापि चिन्तितम् । किमत्र भविष्यति । मया द्रष्टव्योयं न्यायः । ततः कौतुकादहमपि तावनु प्रस्थितः । अत्रान्तरे तीक्ष्णदंष्ट्रो नामारण्यमार्जारस्तयोर्विवादं श्रुत्वा मार्गासन्नं नदीतटमासाद्य कृतकुशोपग्रहो निमीलितैकनयन ऊर्ध्वबाहुरर्धपादस्पृष्टभूमिः श्रीसूर्याभिमुख इमां धर्मदेशनामकरोत् । अहो असारोयं संसारः । क्षणभङ्गुराः प्राणाः । स्वप्नसदृशः प्रियसमागमः । इन्द्रजालवत्कुटुम्बपरिग्रहोयम् । तद्धर्मं मुक्त्वा नान्या गतिरस्ति । उक्तं च ।

यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ९६ ॥
नाच्छादयति कौपीनं न दंशमशकापहम् ।
शुनः पुच्छमिवानर्थं पाण्डित्यं धर्मवर्जितम् ॥ ९७ ॥

अन्यच्च ।

पुलका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्येषु येषां धर्मो न कारणम् ॥ ९८ ॥
श्रेयः पुष्पफलं वृक्षाद्दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस्तैलं च पिण्याकाच्छ्रेयान्धर्मस्तु मानुषात् ॥ ९९ ॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम् ।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा ॥ १०० ॥
स्थैर्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः ।
बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०१ ॥
संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ १०२ ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १०३ ॥

अथ तस्य तां धर्मदेशनां श्रुत्वा शशक आह । भोः कपिञ्जल एष नदीतीरे तपस्वी धर्मवादी तिष्ठति । तदेनं पृच्छावः । कपिञ्जल

आह । ननु स्वभावतोयमस्माकं शत्रुभूतः । तद्दूरे स्थित्वा पृच्छावः । कदाचिदस्य व्रतवैकल्यं संपत्स्यते । ततो दूरस्थौ तावूचतुः । भोस्तपस्विन्धर्मदेशक आवयोर्विवादो वर्तते । तद्धर्मशास्त्रद्वारेणास्माकं निर्णयं देहि । यो हीनवादी स ते भक्ष्य इति । स आह । भद्रौ मा मैवं वदतः । निवृत्तोहं नरकमार्गाद्धिंसाकर्मणः । अहिंसैव धर्ममार्गः । उक्तं च ।

अहिंसापूर्वको धर्मो यस्मात्सद्भिरुदाहृतः ।
यूकमत्कुणदंशादींस्तस्मात्तानपि रक्षयेत् ॥ १०४ ॥
हिंसकान्येव भूतानि यो हिनस्ति स निर्घृणः ।
स याति नरकं घोरं किं पुनर्यः शुभानि च ॥ १०५ ॥

एते ये याज्ञिका अपि यज्ञकर्मणि पशून्घ्नन्ति ते मूर्खाः । परमार्थं श्रुतेर्न जानन्ति । तत्र किलैतदुक्तं यदजैर्यष्टव्यम् । अजा व्रीहयस्तावत्सप्तवार्षिकाः कथ्यन्ते न पुनः पशुविशेषाः । उक्तं च ।

वृक्षांश्छित्त्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरकं केन गम्यते ॥ १०६ ॥

तन्नाहं भक्षयिष्यामि जयपराजयनिर्णयं करिष्यामि । परं वृद्धोहं दूरान्न यथावच्छृणोमि । एवं ज्ञात्वा समीपवर्तिनौ भूत्वा विवादं वदतं येन मेविज्ञाय परमार्थं वचो वदतः परत्र न विरुध्यते । उक्तं च ।

मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात् ।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः ॥ १०७ ॥

तथा च ।

एकमश्वानृते हन्ति दश हन्ति गवानृते ।
शतं कन्यानृते हन्ति सहस्रं पुरुषानृते ॥ १०८ ॥
उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः ।
तस्माद्दूरेण स त्याज्यो न्यायो वा कीर्तयेदृतम् ॥ १०९ ॥

तस्माद्विश्रब्धैर्भूत्वा कर्णोपान्ते निवेद्यताम् । किं बहुना । तेन क्षुद्रेण तूर्णं विश्वासितावुभौ यथा बुद्धिविहीनौ तौ संजातावङ्कवर्तिनौ ।

ततश्च तेनापि समकालमेकः पादान्तेनाक्रान्तोन्यो दंष्ट्राक्रकचेन । ततो गतप्राणौ तौ भक्षिताविति । अतोहं ब्रवीमि ।

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ ११० ॥

तद्भवन्तोप्येवं दिवान्धमर्थपतिमासाद्य राञ्यन्धाः शशकपिञ्जलमार्गेण यास्यन्ति । एवं ज्ञात्वा यदुचितं तद्विधेयम् । अथ तस्य तद्वचनं श्रुत्वा साध्वनेनाभिहितमित्युक्त्वा भूयोपि पार्थिवार्थं समेत्य मन्त्रयिष्याम इति ब्रुवाणाः सर्वे यथाभिमतं जग्मुः । केवलमवशिष्टो भद्रासनोपविष्टोभिषेकार्थं दिवान्धः कृकालिकया सहास्ते । अथ तेनाभिहितम् । कः कोत्र । भोः-किमद्यापि न क्रियते मेभिषेकः । अथ कृकालिकयाभिहितम् । भद्र कृतोयं विघ्नस्ते काकेन । गतास्ते विहगा यथेप्सितासु दिक्षु । केवलमेक एवायं वायसः केनापि हेतुना तिष्ठति । तदुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयिष्यामि । तच्छ्रुत्वा स सविषादं वायसमाह । भो दुष्टात्मन् किं मया तेपकृतं यद्राज्याभिषेको मे विघ्नितः । तदद्यप्रभृति सान्वयमावयोर्वैरम् । उक्तं च ।

रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ १११ ॥

इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः । अथ भयव्याकुलो वायसो व्यचिन्तयत् । अहो अकारणवैरमासादयता मया किं व्याहृतम् । उक्तं च ।

अदेशकालज्ञमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः ।
योत्राब्रवीत्कारणवर्जितं वचो
न तद्वचः स्याद्विषमेव तद्भवेत् ॥ ११२ ॥

बलोपपन्नोपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम् ।

भिषङ्ग्मास्तीति विचिन्त्य भक्षये-
दकारणात्को हि विचक्षणो विषम् ॥ ११३ ॥

एवमुक्त्वा काकोपि स्वभवनं प्रति प्रायात् । तद्वत्स एवमस्माभिः सह वैरं कौशिकानामन्वयागतम् । मेघवर्ण आह । तात तदेवं गतेस्माभिः किं क्रियते । स आह । वत्स एवं गतेपि षाड्गुण्यादपरः स्थूलोभिप्रायोस्ति । तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय यास्यामि रिपून्वञ्चयित्वा वधिष्यामि । उक्तं च ।

बहुबुद्धिसमुपेताः सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छागलादिव ॥ ११४ ॥

मेघवर्ण आह । कथमेतत् । सोब्रवीत् ।

## कथा ३.

अस्ति कस्मिंश्चिदधिष्ठाने मित्रशर्मा नाम ब्राह्मणः कृताग्निहोत्रपरिग्रहः प्रतिवसति स्म । स कदाचिन्माघमासे सौम्यानिले प्रवाति मेघाच्छादिते गगने मन्दंमन्दं वर्षति पर्जन्ये पशुप्रार्थनार्थं कंचिद्ग्रामान्तरं गतः । कश्चिद्यजमानो याचितः । भो यजमान आगामिन्याममावास्यायां यक्ष्यामि यज्ञम् । तद्यजनार्थं पशुमेकं समर्पय । अथ तेनातीव पीवरतनुः पशुः प्रदत्तः । सोपि समर्थस्तं पशुमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं पुराभिमुखं प्रतस्थे । अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः संमुखा बभूवुः । तैस्तादृशं पीवरतनुं पशुं स्कन्धे कृतमालोक्य मिथोभिहितम् । भो अस्य पशोर्भक्षणादद्यतनीयो हिमपातो व्यर्थतां नीयते । तदेनं वञ्चयित्वास्य सकाशाद्गृह्यते । अथ तेषामेकतमो वेषपरिवर्तनं विधाय संमुखो भूत्वापरमार्गेण तमाहिताग्निमूचे । भो भो बालाग्निहोत्रिन् किमेवं जनविरुद्धं हास्यकार्यमनुष्ठीयते यदेष सारमेयोपवित्रः स्कन्धाधिरूढो नीयते । उक्तं च ।

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः ।
रासभोष्ट्रौ विशेषेण तस्मात्तान्नैव संस्पृशेत् ॥ ११५ ॥

ततश्च तेन कोपाविष्टेनाभिहितम् । अहो किमन्धो भवान्यत्पशुं सारमेयत्वेन प्रतिपादयसि । स आह । ब्रह्मन् न कोपः कार्यः । यथेच्छं गम्यताम् । अथ यावत्किंचिद्वनान्तरं गच्छति तावद्द्वितीयो धूर्तः संमुखमभ्युपेत्य तमुवाच । भो ब्रह्मन् कष्टं कष्टम् । यद्यपि वल्लभोयं मृतवत्सस्तथापि स्कन्ध आरोपयितुमशक्यः ।

उक्तं च ।

तिर्यञ्चं मानुषं वापि यो मृतं संस्पृशेत्कुधीः ।
पञ्चगव्येन शुद्धिः स्यात्तस्य चान्द्रायणेन वा ॥ ११६ ॥

अथासौ सकोपमाह । भोः किमन्धो भवान्यत्पशुं मृतवत्सं वदसि । सोब्रवीत् । भगवन् मा कोपं कुरु । अज्ञानान्मयाभिहितम् । तत्त्वमात्मन उचितेन समाचरेति । अथ यावत्स्तोकं वनान्तरं गच्छति तावत्तृतीयो धूर्तः संमुखमुपेत्य तमुवाच । भो अयुक्तमेतद्यद्रासभं स्कन्धारूढं नयसि । तत्त्यज्यतामेषः । उक्तं च ।

यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोथवा ।
सचैलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये ॥ ११७ ॥

तत्त्यजैनं यावत्कोपि न पश्यति । अथासौ तं पशुं रासभं मन्यमानो भयाद्भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य पलायितुं प्रारब्धः । ततस्तेपि त्रयो मिलित्वा पशुमादाय यथेच्छं भक्षितुमारब्धाः । अतोहं ब्रवीमि ।

बहुबुद्धिसमुपेताः सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छागलादिव ॥ ११८ ॥

अथवा साध्विदमुच्यते ।

अभिनवसेवकविनयैः प्राघूर्णोक्तैर्विलासिनीरुदितैः ।
धूर्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति ॥ ११९ ॥

तदत्रास्ति किंचिद्वक्तव्यमेव । तदवधार्य यथोक्तमनुष्ठीयताम् । स आह । तर्हि समादिश । तवादेशो नान्यथा कार्यः । स्थिरजीव्याह । वत्स आकर्णय नहि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः । तन्मां विपक्षभूतं कृत्वातिनिष्ठुरवचनैर्भर्त्सय । यथा विपक्षप्रणि-

धीनां प्रत्ययो भवति तथा समाहृतरुधिरैरालिप्य मां न्यग्रोधस्याधः प्रक्षिप्य गम्यतां पर्वतमृष्यमूकं प्रति । तत्र सपरिवारस्तिष्ठ यावदहं सपत्नान्सुप्रणीतेन विधिना विश्वासाभिमुखान्कृत्वा कृतार्थो ज्ञातदुर्गमध्यो दिवसे तानन्धतां प्राप्तांस्त्वां नीत्वा व्यापादयिष्यामि । ज्ञातं मया सम्यक् । नान्यथा सिद्धिरस्ति । मत्वेक्षस्व । यतो दुर्गमेतदपसाररहितं केवलं वधाय भवति । उक्तं च ।

अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते ।
अपसारपरित्यक्तं दुर्गव्याजेन बन्धनम् ॥ १२० ॥

न च त्वयास्मदर्थं कृपा कार्या । उक्तं च ।

अपि प्राणसमानिष्टान्पालितांल्लालितानपि ।
भृत्यान्युद्धे समुत्पन्ने पश्येन्म्लानामिव स्रजम् ॥ १२१ ॥

तथा च ।

प्राणवद्रक्षयेद्भृत्यान्स्वकार्यमिव पोषयेत् ।
सदैकदिवसस्यार्थे यत्र स्याच्छत्रुसंगमः ॥ १२२ ॥

तत्त्वया नात्र विषये निषेधनीयोहम् । इत्युक्त्वा तेन सह शुष्ककलहं कर्तुमारब्धः । अथान्ये ते तस्य भृत्याः स्थिरजीविनमुच्छृङ्खलवाचा जल्पन्तमवलोक्य तस्य वधायोद्यता मेघवर्णेनाभिहिताः । अहो निवर्तध्वं यूयम् । अहमेवास्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि । इत्यभिधाय तस्योपरि समारुह्य लघुचञ्चुप्रहारैस्तं निहत्य रुधिरेण प्लावयित्वा यथाभिप्रेतं सपरिजनो गतः । अत्रान्तरे कृकालिकया द्विषत्प्रणिधिभूतया सर्वं तदमात्यव्यसनं मेघवर्णस्य गमनं चोलूकराजाय निवेदितम् । यत्तवारिः संप्रति क्वापि भीतो भीतपरिवारश्च प्रचलितः । उलूकोपि तदाकर्ण्यास्तमनवेलायां सामात्यपरिजनो वायसवधार्थं प्रचलितः । प्राह च । यदहो त्वर्यतां त्वर्यताम् । भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते । उक्तं च ।

शत्रोः प्रचलने छिद्रमेकमन्यत्र संश्रयम् ।
कुर्वाणो जायते वश्यो व्यग्रत्वे राजसेविनाम् ॥ १२३ ॥

न च च्छिद्रं विना शत्रुर्देवानामपि सिध्यति ।
छिद्रं शक्रेण संप्राप्य दितेर्गर्भो विदारितः ॥ १२४ ॥

एवं ब्रुवाणाः समन्तात्तं न्यग्रोधपादपमधः परिवेष्ट्यावस्थिताः । यावन्न कश्चिद्वायसो दृश्यते तावच्छाखाग्रसमारूढो हृष्टमनाः स्तूयमानो वन्दिभिरुलूकराज एतदुवाच । अहो ज्ञायतां तेषां मार्गः । यत्कतमेन मार्गेण ते प्रनष्टाः काकाः । तन्न यावद्दुर्गं समाश्रयन्ति तावदेव पृष्ठतो गत्वा व्यापाद्या भवन्ति । उक्तं च ।

वृतिमप्याश्रितः शत्रुरवध्यः स्याज्जिगीषुणा ।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम् ॥ १२५ ॥

अथास्मिन्प्रस्तावे स्थिरजीवी मन्दंमन्दं शब्दमकरोत् । तच्छ्रुत्वा ते सर्वेप्युलूकास्तस्य वधार्थं प्रजग्मुः । अथ तेनोक्तम् । अहो अहं स्थिरजीविनामा मेघवर्णस्य मन्त्री मेघवर्णेनेदृशीमवस्थां नीतः । तन्निवेदयध्वमात्मनः स्वामिने । तेन सह बहु वक्तव्यमस्ति । अथ तैर्निवेदिते स उलूकराजो विस्मयसमाविष्टस्तत्सकाशं गत्वा प्रोवाच । भोः किमेतां दशां गतस्त्वम् । तत्कथ्यताम् । स्थिरजीव्याह । देव श्रूयताम् । अतीतदिने स दुरात्मा मेघवर्णो युष्मद्व्यापादितप्रभूतवायसान्दृष्ट्वा युष्माकमुपरि कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत् । ततो मयाभिहितम् । स्वामिन् न युक्तं भवतस्तदुपरि गन्तुम् । उक्तं च ।

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि वाञ्छेत् ।
न वध्यते वेतसवृत्तिरत्र
व्यक्तं प्रणाशो हि पतंगवृत्तेः ॥ १२६ ॥

तत्तस्योपप्रदानेन संधिर्विधातुं युक्तः । उक्तं च ।

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान् ।
दत्त्वा प्ररक्षयेत्प्राणान्रक्षितैस्तैर्धनं पुनः ॥ १२७ ॥

तच्छ्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं मामाशङ्कमानेनाहमीदृशीमवस्थां नीतः । तत्तव पादाः सांप्रतं मे शरणम् । किं बहुना

विज्ञप्तेन । यावदहं प्रचलितुं शक्नोमि तावत्त्वां तस्याश्रये नीत्वा सर्ववायसक्षयं विधास्यामि । अथारिमर्दन एतदाकर्ण्य पितृपैतामहान्सचिवानेकत्र स्थान आकार्य तैः सह मन्त्रितवान् । रक्ताक्षः क्रूराक्षो दीप्ताक्षो वक्रनास एते तस्य चत्वारः सचिवाः । तत आदौ रक्ताक्षं पृष्टवान् । भद्र तावदेष तस्य रिपोर्मन्त्री मम हस्तगतः । तत्किं क्रियताम् । स आह । देव एष तस्याद्यो मन्त्री यद्यपि वेलामुहूर्तगुणेन दुर्जनोक्तेन वाक्येन वियोजितस्तदप्यस्य वाक्यं श्रोतव्यं यतो न सदैव विग्रहासक्तेन भूभुजा भाव्यम् । उक्तं च ।

कोषक्षयो न निद्रा च न विलासेषु च स्पृहा ।
विग्रहासक्तचित्तानां न रतिः क्वापि जायते ॥ १२८ ॥

तस्मादस्य द्वारेण तेन सह साम्ना वर्तितव्यम् । उक्तं च ।

सामादिदण्डपर्यन्तो नयः प्रोक्तः स्वयंभुवा ।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत् ॥ १२९ ॥

तथा च ।

सामसिद्धानि कार्याणि विकृतिं यान्ति न क्वचित् ।
सज्जनानां मनांसीव भवन्ति प्रमुदे सदा ॥ १३० ॥
सामसाध्येषु कार्येषु यो दण्डं योजयेद्बुधः ।
स पित्ते शर्कराशाम्ये पटोलं कटुकं पिबेत् ॥ १३१ ॥

यत्केचिच्चैव वदन्ति यच्छत्रवो दण्डसाध्याः स्युर्न सामसाध्यास्तदप्ययुक्तम् । उक्तं च ।

पर्णशब्दमपि श्रुत्वा त्रस्यन्ति हरिणाश्च ये ।
तेपि साम्नात्र बध्यन्ते लुब्धकैः पश्य सर्वदा ॥ १३२ ॥

अन्यच्च ।

शत्रोरुच्छेदनार्थाय न साम्नोस्त्यन्यदौषधम् ।
हेमन्ते हिमपातेन पद्मिनी किं न दह्यते ॥ १३३ ॥

तद्यदि मद्वचः प्रमाणं तत्संधानाय वधाय वा रिपोः साम प्रयोक्तव्यं यतो नीतावप्ययुक्तम् ।

शनैः शनैर्ददात्येष पादौ भूतानुकम्पया ।
अहो जलचरः प्राणी बकः परमधार्मिकः ॥ १३४ ॥

एवं तस्याभिप्रायं बुद्ध्वा क्रूराक्षमाह । भद्र तवाभिप्रायमपि श्रोतुमिच्छामि । एवंविधे कृत्ये समुपस्थिते किं मम कृत्यं भवति । स आह । देव तेन निसर्गवैरिणा यत्सामप्रयोजनं तन्मम न भाति । उक्तं च ।

चतुर्थोपायसाध्ये तु शत्रौ सान्त्वमपक्रिया ।
स्वेद्यमानज्वरं प्राज्ञः कोम्भसा परिषिञ्चति ॥ १३५ ॥

तद्भेदसाध्यो दुष्टोपि रिपुर्भवति । उक्तं च ।

अपि वीर्योत्कटः शत्रुर्यतो भेदेन सिध्यति ।
तस्माद्भेदः प्रयोक्तव्यः शत्रूणां विजिगीषुणा ॥ १३६ ॥
असाध्यं शत्रुमालोक्य दायादं तस्य भेदयेत् ।
राज्यकामं समर्थं च यथा रामो विभीषणम् ॥ १३७ ॥
कूटलेख्यैर्धनोत्सर्गैर्दूषयेच्छत्रुपक्षजम् ।
प्रधानपुरुषं यद्वद्विष्णुगुप्तेन राक्षसः ॥ १३८ ॥
भेदयेच्च बलं राजा दुर्भेद्यमपि वित्ततः ।
यतः सुखेन भज्येत घुणोत्कीर्णसुदारुवत् ॥ १३९ ॥

एवं ज्ञात्वा विवेकिना शत्रुसाधनाय भेदः प्रयोक्तव्यः । सर्वो विजिगीषुर्गुणयुक्तोपि शत्रुर्भेदात्तव वश्यो भवति । उक्तं च ।

अत्यच्छेनाविरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भिन्नेन संप्राप्तं मौक्तिकेनापि बन्धनम् ॥ १४० ॥

तद्यदि मम मतमनुष्ठीयते तदा स्वपक्षे भेदो रक्ष्यः परपक्षे प्रयोक्तव्यः । एवं तस्याभिप्रायं विदित्वा दीप्ताक्षमाह । भद्र अत्र विषये तव कोभिप्रायः । स आह । देव मम सामभेदौ द्वावपि न प्रतिभासेते यतो न साम्ना न च भेदेन तथा शत्रुः सिध्यति यथोपप्रदानलुब्ध उपप्रदानेन विश्वास्य वध्यः स्यात् । उक्तं च ।

लोभाविष्टो नरो वित्तं वीक्षते न स चापदम् ।
दुग्धं पश्यति मार्जारो यतो न लकुटाहतिम् ॥ १४१ ॥

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १५७ ॥

तथा च ।

सत्कृताश्च कृतार्थाश्च कृतज्ञा न भवन्ति ये ।
मृतानामपि नो काकास्तेषां मांसानि भुञ्जते ॥ १५८ ॥

तस्मादस्याहं संमानं करिष्यामि । तच्छ्रुत्वा वक्रनास आह । देव न युक्तमेतच्छत्रुपक्षपातिनां दुर्गदर्शनम् । उक्तं च ।

अज्ञाताः पुरुषा यस्य प्रविशन्ति महीपतेः ।
दुर्गं तस्य न संदेहः प्रविशन्ति द्रुतं द्विषः ॥ १५९ ॥

तच्छ्रुत्वारिमर्दन आह । भो न युक्तमुक्तं भवता । दुर्गं दुर्गमिति कातरप्रवादोयम् । शूराणां तु स्वभुजवीर्यपञ्जरं दुर्गम् । उक्तं च ।

यस्य स्यात्सहजं वीर्यं हन्यते स तु नारिभिः ।
मणिदीपस्य नोग्रोपि वायुर्बाधयते शिखाम् ॥ १६० ॥

दुर्गाश्रयोपि कालेन नाशं यास्यति । उक्तं च ।

स्थानं त्रिकूटं परिखा समुद्रो
रक्षांसि योधा धनदश्च वित्तम् ।
शास्त्रं च यस्योशनसा प्रणीतं
स रावणः कालवशाद्विपन्नः ॥ १६१ ॥

इत्युक्त्वा तमुवाच । भोः स्थिरजीविन् मया त्वं तावत्परिग्रहासंमतेनापि रक्षितो गृहीतश्च । तदागम्यतां मे दुर्गम् । तत्र च यत्तव कुलोचितं तत्कुरुष्व । सोप्यन्तर्विहस्य तमुवाच । भोः स्थिरजीविनः किमतिबहुना व्यर्थप्रलपनेन । मदीयकुलीनतां फलेन ज्ञास्यति भवान् । तच्छ्रुत्वा वक्रनासः प्रोवाच । भो विनष्टं कुलमस्माकम् ।

सा सा संपद्यते बुद्धिः सा मतिः सा च भावना ।
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता ॥ १६२ ॥

कौशिकानां राजदोषेण विनाशः समागतः । तत्कस्य कथ्यते ।

उक्तं च ।

दोषमार्त्तो जनः कृत्स्नं पार्थिवाय निवेदयेत् ।
यदा स्याद्दोषवान्भूपस्तदा कस्तं निषेधयेत् ॥ १६३ ॥

एवं तमनादृत्य स्थिरजीविनमादाय स्वदुर्गमाससादोलूकपतिः । स्थिरजीव्यपि तद्दुर्गविषमतामालोक्य स्वचित्तेचिन्तयत् । एतद्दुर्गं तावद्यथोक्तं दुर्गविषमं परमसारं नास्ति । तदन्तर्मृत्युपाशबद्धा मम वशे संजाताः । येन मन्त्रिणा वक्रनासेन स्वस्वामी मां प्रति स्थिरजीवी वध्यतामित्युक्तस्तत एषामुलूकानां मध्ये नीतिज्ञोयं हितश्च । अन्ये तु मूढतमाः स्वामिना सह । अथ त उलूकास्तेनोलूकपतिनोक्ताः । यदहो स्थिरजीविनो भद्रतर आश्रयः समर्पणीय इति । स्थिरजीवी तच्छ्रुत्वा व्यचिन्तयत् । मया तावदेषां वधोपायश्चिन्तितव्यः । ततः स मया मध्यस्थितेन न भविष्यत्येतेपि यतः सावधाना भविष्यन्ति । तदेतद्दुर्गद्वारमाश्रयामि येनात्र स्थितोभिप्रेतं करोमि । ततश्चोलूकभूपमाह । देव तवैतद्युक्तम् । परमहमपि नीतिज्ञो हितश्च । यद्यपि तत्त्वानुरक्तः शुचिस्तथापि स्वदुर्गमध्ये न वासो ममार्हः । तदहमत्रैव दुर्गद्वारे स्थितः सदा भक्तिसेवां करिष्यामि । तथानुष्ठिते वक्रनासः स्ववर्गीयानाहूय प्रोवाच । भो एतावत्कालं यावदेतद्दुर्गं कुशलं चास्माकं भूपतेरभूत् । परं संप्रत्यन्यं पर्वतमाश्रित्य वयं सर्वेन्यद्दुर्गं संश्रयामः । उक्तं च ।

अनागतं यः कुरुते स शोभते
स शोचते यो न करोत्यनागतम् ।
वनेत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि नः श्रुता ॥ १६४ ॥

ते प्रोचुः । कथमेतत् । सोब्रवीत् ।

## कथा ४.

कस्मिंश्चिद्वनप्रदेशे खरनखरो नाम सिंहः प्रतिवसति स्म । स कदाचिदितश्चेतश्च परिभ्रमन्क्षुत्क्षामो न किंचित्सत्त्वमाससाद । तत-

अास्तमनसमये महतीं गुहामासाद्य प्रविश्य चिन्तितवान् । नूनमेतस्यां गुहायां रात्रौ केनचित्सत्त्वेनागन्तव्यम् । तन्निभृतो भूत्वा तिष्ठामि । एवं तस्य तत्र स्थितस्याधिपुच्छो नाम तत्स्वामी लोपाशकः समायातः । स यावत्पश्यति तावत्सिंहपदपद्धतिर्गुहायां प्रविष्टा भवति न च निष्क्रान्ता । ततश्चाचिन्तयत् । अहो विनष्टोस्मि । नूनमस्यामन्तर्गतेन सिंहेन भाव्यम् । तत्किं करोमि । कथं यास्यामि । एवं विचिन्त्य द्वारस्थः फूत्कर्तुमारब्धः । अहो बिल रे । इति प्रोच्य भूयोप्यभाषत । भोः किं न वेत्सि यत्त्वया सहैकः समयधर्मोस्ति । मया त्वं वक्तव्यो बाह्यात्समायातेन त्वयाप्यहमाकारणीयः । तद्यदि मां नाह्वयसि ततोहं द्वितीयां गुहां यास्यामि । सिंहोपि तच्छ्रुत्वा चिन्तितवान् । नूनमेषा गुहा समायातस्याह्वानं सदा करोति । साद्य मद्भयान्न किंचिद्रूते । अथवा साध्विदमुच्यते ।

भयसंत्रस्तमनसां हस्तपादादिकाः क्रियाः ।
प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत् ॥ १६५ ॥

तदहमप्याह्वानं करोमि येन प्रविश्य मम भोज्यतां यास्यतीति । एवं संप्रधार्य तस्याह्वानमकरोत् । अथ सिंहशब्देन सा गुहा प्रतिरवशतसपूर्णान्यानपि दूरस्थान्सत्त्वांस्त्रासयामास । लोपाशकोपि पलायनपर इमं श्लोकमपठत् ।

अनागतं यः कुरुते स शोभते
स शोचते यो न करोत्यनागतम् ।
वनेत्रसंस्थस्य समागता जरा
बिलस्य वाणी न कदापि नः श्रुता ॥ १६६ ॥

एवं मत्वा मया सह गम्यताम् । एवमभिधाय सपरिजनो वक्रनासोन्यं देशं गतः ।

अथ वक्रनासे गते स्थिरजीव्यपि प्रहृष्टमना व्यचिन्तयत् । अहो कल्याणमस्माकमुपस्थितम् । तदेते मूढतमाः सुवध्या मे संजाताः ।

उक्तं च ।

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः ।
क्रमायाता ध्रुवं तस्य नचिरात्स्यात्परिक्षयः ॥ १६७ ॥

अहो साध्विदमुच्यते ।

मन्त्रिरूपा हि रिपवः संभाव्यास्ते विचक्षणैः ।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः ॥ १६८ ॥

एवं विचिन्त्य स्वकुलाये वनकाष्ठिकामेकैकां दिनं प्रति प्रक्षिपति गुहाप्रदीपनार्थम् । न च ते मूर्खा उलूका जानन्ति यदेष कुलायमस्मदुद्द्योतनाय वृद्धिं नयति । अथवा साध्विदमुच्यते ।

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १६९ ॥

अथ प्रभूतकाष्ठसंभारे कुलायव्याजेन रचिते दुर्गद्वारे सूर्योदये संजातेन्धतां प्राप्तेषूलूकेषु स्थिरजीव्यृष्यमूकं गत्वा मेघवर्णमाह । स्वामिन् दाहसाध्या कृता सा मे रिपुगुहा । तत्सर्वपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं प्रान्ते गृहीत्वा तत्र गुहाद्वारेस्मत्कुलाये प्रक्षिपतु येन सर्वशत्रूणां कुम्भीपाकनरकन्यायो भवति । तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह । तात तत्कथयात्मवृत्तान्तम् । चिराद्दृष्टोसि । स आह । वत्स नायं कालो वक्तव्यस्य यतः कदाचित्तस्य रिपोः कश्चित्प्रणिधिः समागमनं निवेदयिष्यति । ततो ज्ञानादतोप्यपसरणमन्यत्र कुर्वन्ति । तत्त्वर्यताम् । उक्तं च ।

शीघ्रकृत्ये समुत्पन्ने विलम्बयति यो नरः ।
तत्कृत्ये देवता तस्य कोपाद्विघ्नं प्रयच्छति ॥ १७० ॥

तथा च ।

यस्य यस्य हि कार्यस्य सफलस्य विशेषतः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ १७१ ॥

तद्गृहायातस्ते हतशत्रोः सर्वं सविस्तरं निर्व्याकुलतया कथयिष्यामि । अथासौ तदाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां

चञ्च्वग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्रक्षिप्तवान् । ततस्ते सर्वे दिवान्धा वक्रनासमन्त्रिवाक्यं स्मरन्तो द्वारस्यावृतत्वाद्-निःसरन्तो गुहामध्ये कुम्भीपाकस्यापायमापन्ना मृताश्च । एवं शत्रून्निःशेषतां नीत्वा भूयोपि मेघवर्णस्तमेव न्यग्रोधपादपदुर्गं गतः प्रमुदितमनाः सुखोपविष्टः सभामध्ये स्थिरजीविनमपृच्छत् । यत्तात त्वया कथं शत्रुगतेनैतावत्कालो नीतः । तदत्र कौतुकमस्माकं वर्तते । तत्कथ्यताम् । स आह । आगामिफलवाञ्छयैत्र कष्टमपि सेवन्निन ज्ञायते ।

उक्तं च

शक्तेनापि सता जनेन विदुषा कालान्तरप्रेक्षिणा
वस्तव्यं खलु वज्रपातविषमे क्षुद्रेपि पापे जने ।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन किं
भीमेनातिबलेन मत्स्यभवनेपूपा न संघट्टिताः ॥ १७२ ॥

तथा च ।

कार्यस्यापेक्षया भुक्तं विषमप्यमृतायते ।
सर्वेषां प्राणिनां यत्र नात्र कार्या विचारणा ॥ १७३ ॥

अन्यच्च ।

सिद्धिं वाञ्छयता जनेन विदुषा तेजो निगूह्य स्वकं
सत्त्वोत्साहवतापि दैवगतिषु स्थैर्यं प्रकार्यं क्रमात् ।
देवेन्द्रद्रविणोपमैर्बहुगुणैरभ्यर्चितो भ्रातृभिः
किं क्लिष्टः सुचिरं विराटभवने पूर्वं न धर्मात्मजः ॥ १७४ ॥

तथा च ।

रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना
कान्त्या श्रीरिव यात्र सापि विदशां कालक्रमादागता ।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाख्यातया
द्रौपद्या किल मत्स्यराजभवने घृष्टं न किं चन्दनम् ॥१७५॥

ततस एव नीतिज्ञो भवति योपमानमपि सहित्वा कार्यं साधयति

उक्तं च ।

महत्त्वमेतन्महतां नयालंकारधारिणाम् ।
न मुञ्चन्ति यदारम्भं प्राप्तेपि व्यसनोदये ॥ १७६ ॥

तथा च ।

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ १७७ ॥

मेघवर्ण आह । तत्कृतं निष्कण्टकं मे राज्यं शत्रून्निःशेषतां नयता त्वया । अथवा युक्तमेतन्नयवादिनाम् । उक्तं च ।

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च ।
पुनःपुनः प्रवर्धन्ते तस्माच्छेषं न धारयेत् ॥ १७८ ॥

तन्नास्ति त्वत्समोन्यो मन्त्री बुद्धिमान्येन शस्त्रमोक्षणं विनापि स्वबुद्ध्या शत्रवो हताः । अथवा साध्विदमुच्यते ।

शस्त्रैर्हतास्तु रिपवो न हता भवन्ति
प्रज्ञाहताश्च नितरां सुहता भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ १७९ ॥

स्थिरजीव्याह । स देवप्रतापभावोयं भविष्यद्वृद्धिसूचकः । वयं पुनर्मूकाः कृत्यानुष्ठानमात्राः । उक्तं च ।

प्रसरति मनः कार्यारम्भे दृढीभवति स्पृहा
स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् ।
फलति सकलं कृत्यं चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ १८० ॥

तत्तव भविष्यतो विपक्षस्य भावितव्यतेति बुद्धिविपर्यासेन ज्ञातं मया । ये विज्ञा भवन्ति पुरुषाणां भविष्यतामभविष्यतां च व्यवहारादेव जानन्ति । उक्तं च ।

वाञ्छैव सूचयति पूर्वतरं भविष्यं
पुंसोन्यजन्मसुकृतं यदि वेतरच्च ।
विज्ञायते शिशुरजातकलापचिह्नः
प्रत्यक्पदैरपसरन्सरसः कलापी ॥ १८१ ॥

तद्यस्य विधिः संमुखो भवति स त्वमिव बुद्धिसंपन्नो भवति । उक्तं च ।

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु वर्धितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥ १८२ ॥
न देवाः शस्त्रमादाय निघ्नन्ति रिपुवत्क्रुधा ।
यं तु हिंसितुमिच्छन्ति बुद्ध्या विश्लेषयन्ति तम् ॥ १८३ ॥
बुद्धौ कलुषभूतायां विनाशे पर्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ १८४ ॥

तथा तव रिपोः संजातो बुद्धिविश्लेषः ॥

॥ समाप्तं चेदं काकोलूकीयं नाम तृतीयं तन्त्रम् ॥

# NOTES TO PANCHATANTRA II. AND III.

P. 1, l. 6.—महिलारोप्यं is, according to Benfey Panch. Vol. II. note 4, probably the town, called by Ptolemy, 'Maliarpha,' and in Tamil 'Mayilpur,' situated near Madras.

P. 1, l. 9.—Metre of śloka 2, Śârdûlavikrîḍita. This verse is attributed to the poet Bîjaka, in the Śârṅgadhara Paddhati No. 972 (Peterson), compare also the notes on Bîjaka in the Introduction to the Subhâshitâvali, p. 72 (Peterson).

P. 2, l. 5 & 6.—The first adjective belongs to the first noun, and the second adjective to the second noun.

P. 2, l. 8.—Metre of śloka 4, Śârdûlavikrîḍita—पौलस्त्यो रावणः.

P. 2, l. 16.—मत्वा=ज्ञात्वा, see also Panch. IV. and V., note to p. 8, l. 17.

P. 2, l. 18.—बुद्धिः 'presence of mind,' हीयते 'does (not) fail.'

P. 2, l. 21.—नो चेत् 'otherwise —(if you. etc.'). The two words denote only the alternative and must be taken by themselves. Another चेत् or यदि must be understood with the following न करिष्यथ; see also Speijer, Sanskrit Syntax, § 485, Rem. 1.

P. 2, l. 24.—उपमा सताम् 'just so it is with etc.' From the Mahâbhârata V. 36, 59.

P. 3, l. 1.—Regarding śloka 8, compare Buddhaghosha's Parables, p. xxii.f.

P. 3, l. 6.—Metre of śloka 9, Âryâ.

P. 3, l. 10.—See Mârkaṇḍeya Purâṇa 68. 41-42.

P. 4, l. 1. With this verse compare Manu VII. 74.

P. 4, l. 11.—The reading of the MSS. नित्यं नागच्छन्ति has been altered to नित्यमागच्छन्ति, though the former reading may possibly be defended.

P. 4, l. 18.—Metre of śloka 17, Vasantatilakâ.

P. 4, l. 22.—माविलम्बम् 'without delay' an avyayîbhâva compound, compare माचिरम् [Benfey].

P. 5, l. 2.—Metre of śloka 19, Drutavilambitâ. From Bhartṛihari's Nîtiśataka, vs. 91. (Telang).

P. 5, l. 7.—Metre of śloka 20, Śârdûlavikrîḍita.

एकान्त 'solitude.'—दुर्नीतं—गुणः । Sense: 'It is impossible to perceive any effect of merit (सुकृतं) or demerit (दुर्नीतं); nor does an apparently safe place afford protection, since fate etc.'

P. 6, l. 15.—The latter half of śloka 26 contains an allusion to the tides of the ocean.—अपेक्षते. 'waits for, *i. e.*, avails himself of the assistance of.'

P. 7, l. 23.—ईश्वर 'rich.'

P. 8, l. 4.—नीतिसर्वस्वम् 'the quintessence of polity.'

P. 8, l. 5.—For śloka 32, compare Tantra IV. and V., note to p. 4, l. 27.

P. 8, l. 7.—After करिष्यति, इति must be understood.

P. 8, l. 9.—Metre of śloka 33, Śârdûlavikrîḍita —कार्यं: 'what do (brutes).........care for, etc.'

P. 8, l. 14.—निमित्तात् 'for some particular reason,' *i. e.*, if the occasion requires their acting together, in order to avoid danger or to secure an advantage.

P. 8, l. 19.—Regarding the story of Indra's treachery, see Mahâbhârata V. 10. 15 ff.

P. 8, l. 21.—The story of the destruction of Diti's fœtus by Indra is told Harivaṁśa I., 3, 131 ff.

P. 9, l. 1.—Verse 39 occurs several times in the Mahâbhârata, see Böhtlingk ; Indische Sprüche No. 3433 note.

P. 9, l. 5.—In this śloka we have the titles of the three famous treatises on Nîti, see also notes to Tantra IV. and V., p. 54, l. 27, and p. 63, l. 21.

P. 9, l. 8.—Construe यो महता थंसारेण सतापि ; instrumental absolute.

P. 9, l. 11.—मैत्रीपक्षपातः "But for that reason (I have) a great partiality for his friendship, *i.e.*, I needs must make him my friend."

P. 9, l. 13.—सासपदीन=सासपद, see Tantra IV. and V., note to p. 34, l. 12.—बलात् 'against thy will.'

P. 9. l. 24.—Divide मांसशकलानि मेध्यानि । बलिशेषाणि [च] अन्यानि च] वत्सलाहृतानि पक्वान्नविशेषाणि ॥ वत्सल *n.* 'friendship.'—पक्वान्नविशेषाणि, used as a neuter against the grammar, occurs also below p. 13, l. 15.—शेष used as a neuter, rare but permissible, see below T. III., śloka 178.

P. 10, l. 7.—Metre of śloka 49, Vasantatilakâ.

P. 10, l. 15.—कृत्रिमं मित्रतां गतौ "they concluded a friendship against nature" (as they were born enemies).

P. 10, l. 24.—उद्धरितः, a Prakritic form, instead of उद्धृतः, see alse Benfey, Panchatantra II., note 753.

P. 11, l. 10.—Construe [हे] तात [ते] धन्या [ये] न पश्यन्तीत्यादि ॥

P. 11, l. 18.—उड्डीनम्=उड्डयनम्।

P. 11, l. 24.—संपातोड्डीनप्रस्थितः 'travelling by the flight called Sampâta.'

P. 11, l. 25.—देशकालवित् "knowing (what is proper for each) place and time, *i.e.*, clever."

P. 12, l. 4.—कलां नार्हन्ति षोडशीम् 'do not possess a sixteenth part [of the refreshing power] of a friend's embrace.'

P. 12, l. 5.—निपुणतरं ज्ञात्वा "recognizing him quite distinctly."

P. 12, l. 7.—चिरकालात् 'on account of (our) long (separation).'

P. 13, l. 8.—कर्मकाराः work without pay and कर्मकराः work for pay, see the Petersburg Dict. s. v.

P. 13, l. 11.—सिद्धमन्नम् 'cooked food.'

P. 13, l. 15.—भक्ष्यविशेषाणि, used as a neuter against the common grammatical rules, see also Benfey, Panchatantra II., note 767, and above p. 9, l. 24.

P. 13, l. 19.—मम रक्षणार्थम् 'in order to protect it from me.' The construction is according to the analogy of the older Sanskrit, where the verbs, meaning 'to protect,' are used both with the ablative and with the genitive; see Speijer, Sanskrit Syntax, § 126 c.

P. 13, l. 24. —प्रतिपत्तिपूर्वकम् 'respectfully.' अभ्यागत=अतिथि.

P. 14, l. 2.—शून्य 'meaningless.'

P. 14, l. 6.—Metre of śloka 60, Śârdûlavikrîḍita.—Regarding the hiatus in the second line see Tantra IV. and V., note to p. 8, l. 10. Another version of this verse occurs Tantra I., vs. 253.

P. 14, l. 10.—अधः 'on the ground.'—शृङ्गरहिता वृषाः 'hornless bulls,' *i.e.*, 'mean, spiritless creatures.'

P. 14, l. 17.—यावत् 'for, during'; a postposition construed with the accusative.—मठचिन्तां समाचर 'rule a monastery.'

P. 15, l. 2.—निधानोष्मणा 'with the help of the warmth imparted by the treasure.'

P. 15, l. 3.—वृद्धिं नी 'to increase.'—त्यागकर्मसमन्वितः '(how much more using it) and spending it in (pious) gifts.'

P. 15, l. 6.—शाण्डिलीमाता, a karmadhâraya compound [Benfey].

P. 15, l. 10.—व्रतग्रहणनिमित्तम् 'in order to undertake a vow to perform a religious ceremony.' The Brâhmaṇa is wanted for the recitation of the Mantras or to assist otherwise in the ceremony.

P. 15, l. 11.—शुश्रूषितः 'honoured.'

P. 15, l. 14.—दक्षिणायनसंक्रान्तिः 'the summer-solstice.'—अनन्तदानफलदा। दानस्य फलं दानफलम्। तच्चानन्तमनन्तदानफलम् | तद्ददातीत्यनन्तदानफलदा। तस्माच्च सर्वे तस्मिन्नहनि बहूनि दानानि ददतीत्याशयः॥

P. 15, l. 21.—दीयतेऽर्थिषु. The construction of दा with the locative is not very common, nor as good as that with the dative or genitive; see also Speijer, Sanskrit Syntax, § 145.

P. 15, l. 24.—काकिणी 'one cowrie.'

P. 15, l. 25.—Metre of ślokas 68, 69 and 72, Âryâ.

P. 16, l. 2.—राजराज 'king of kings' is also a name of niggardly Kubera. Śiva, who is a कृतत्यागमहिमा ascetic, not Kubera, receives the title महेश्वर.

P. 16, l. 5.—सदादानः—अदानः; a pun on दान 'giving,' and दान 'the ichor which flows during the rutting season from the temples of an elephant.'

P. 16, l. 8.—A pun on कर 'hand' and 'ray,' and on मित्र 'friend,' and 'the sun.'

P. 16, l. 11.—The construction of śloka 72 is elliptic. The first line contains an enumeration of the requisites for a फलदं दानम्, and तेषु सत्सु must be supplied after it. For similar constructions compare Tantra IV., śloka 62, Âpastamba Dharmasûtra I. IV. 14, 25.—अनन्ताय स्वर्गाय निःश्रेयसायेत्यर्थः॥

P. 17, l. 9.—रसायन 'the elixir of life;' a medicine supposed to prolong life indefinitely.

P. 17, l. 18.—सूर्यातपे दत्तवती 'exposed them to the sun;' a Prakritic construction.

P. 17, l. 25.—कामन्दकिशास्त्रम् 'the Institutes of Kâmandaki.' We possess a work on Nîti, called Nîtisâra, which is ascribed to this author. According to a commentary on the Nîtisâra, quoted by Dr. Râjendralâl Mitra in the preface to his edition of his work in the Bibliotheca

Indica, p. 1, Kâmandaki was a pupil of Châṇakya, the minister of Chandragupta (B. C. 315). Châṇakya is repeatedly mentioned in the Nîtisâra as the 'Guru.'

P. 18, l. 9.—खहस्तिका 'a pickaxe.'

P. 18, l. 10.—जनचरणामलिनायाम् 'before it has been dirtied by the feet of the people' (who come to the maṭha, and before the footprints of the mice have been effaced).

P. 18, l. 15.—Metre of śloka 79,. Aryâ.—हस्ततुलना 'by (using) their hands instead of scales.'

P. 18, l. 17.—Metre of śloka 80, Vasantatilakâ.—पूर्वतरम् 'long beforehand.'—प्रत्युद्धृतैः 'with steps turned backwards.' When the young peacock, whose tail has not yet grown, has drunk water, he does not turn round, but walks backwards, just like an old bird. The latter must do so in order not to soil the feathers of his tail.

P. 18, l. 25.—Metre of śloka 81, Śârdûlavikrîḍita. According to the Subhâshitâvali No. 655, the verse is by Muktâpîḍa, who *may* be identical with Lalitâditya of Kaśmîr, A. D. 726—762. Śârṅgadhara, No. 940, attributes it to some unknown author.—कूटरचना 'a snare, a trap.'—किंवा करोतु पौरुषम् 'what can human strength effect?' On the meaning of the imperative, see Speijer, Sanskrit Syntax, § 352.

P. 19, l. 6.—महादुर्गम् 'places which are very difficult of access.'

P. 20, l. 7.—Verse 85 occurs both in the Mahâbhârata and the Râmâyaṇa, see Böhtlingk Indische Sprüche No. 617, note.

P. 20, l. 10.—सिद्धौ 'in reality.'

P. 20, l. 18.—गच्छाति लोक इति शेषः ॥ For men fear, lest the poor visitor should have come to beg.

P. 21, l. 7.—अश्रोत्रियम् 'at which no Śrotriya is present.' A Śrotriya is a Brahman, who has studied, at least, one Veda together with its Aṅgas or supplements.

P. 21, l. 9.—योगनिद्रा means originally 'the sleep induced by the practice of Yoga,' during which the soul is separated from the body, and thereby becomes enabled to see the nature of all things. Here it stands for 'deep meditation.'

P. 21, l. 17.—स्वः 'a relation or friend.' Compare the use of the Latin suus.

P. 21, l. 21.—कपर्दक, or rather its fem. कपर्दिका, is the original form which the modern word "cowrie" has been derived.

P. 21, l. 22.—मूर्तं लाघवम् 'insignificance incarnate.'

P. 21, l. 25.—दीपखट्वोत्थच्छायेव 'just as the shadow of a bed pro-jected by a lamp.' Dissolve खट्वाया उत्तिष्ठति खट्वोत्था। दीपेन खट्वोत्था दीपखट्वोत्था। दीपखट्वोत्थासौ छाया च दीपखट्वोत्थ०. To stand in the shadow of a bed is considered improper and inauspicious.

P. 22, l. 13.—Metre of śloka 105, Upajâti.

P. 22, l. 20.—पुस्तक is usually a neuter. But other instances of its use as a masculine occur, *e. g.*, Mṛichchhakaṭikâ, p. 49, l. 2. Stenzler.

P. 23, l. 7.—With the name प्राप्तव्यमर्थः compare the early Christian pre-name 'Quodvultdea' and the Puritan 'Fight the-battle-of-faith,' etc.

P. 24, l. 1.—धवलगृह 'the upper story' of a house, called so because it is whitewashed.

P. 24, l. 7.—खण्डदेवकुल 'a temple in ruins.'

P. 24, l. 9.—दण्डपाशक 'a watchman, a policeman.'

P. 24, l. 21.—वीथीमार्गेण 'through the bazar.'

P. 24, l. 23.—राजमार्गासन्नश्रेष्ठिगृहद्वारि 'at the door of the Sheṭh's house, which stood near the king's highway and before which a nuptial hall (maṇḍapa) and an altar had been erected,' रचितमण्डपवेदिकायाम् agrees with द्वारि.

P. 26, l. 23.—In Sanskrit three or more nouns, one of which is a neuter, take the adjective in the neuter plural, Pâṇini I. 2, 69.

P. 26, l. 26.—Metre of śloka 115, Vaṁśastha.

P. 27, l. 1 and 2.—यमान्तम् 'to Yama's (house),' see Tantra IV. and V., note to p. 3, l. 23.—पञ्चपदी न दीयते 'does not accompany him even five steps.'

P. 27, l. 9.—Śloka 116 is attributed to Vyâsamuni, Subhâshitâvali No. 3356, likewise śloka 118, ibidem No. 3353. According to Śârṅgadhara Paddhati No. 338, śloka 116 belongs to Vishṇuśarman.

P. 27, l. 13.—Metre of śloka 120, Sârdûlavikrîḍita.

P. 28, l. 2.—अस्ति, see Tantra IV. and V., note to p. 5, l. 13.

P. 28, l. 11.—यद् whether (the birds rise.................still they obtain nothing that, etc.)—प्राप्त्या पूर्वजन्मकृतकर्मफलप्राप्त्या विधिनेति तावत्; compare कर्मप्राप्त्या p. 27, l, 21.

P. 28, l. 14.—Metre of śloka 124, Âryâ.

P. 28, l. 16.—Śloka 125 belongs according to Subhâshitâvali No. 3081, to Vyâsa and occurs actually more than once in the Mahâbhârata (see ibidem, note).

P. 28, l. 21.—सुसंश्लिष्टौ, the masculine is against the grammar, see above note to p. 26, l. 23. The verse belongs according to Subhâshitâvali No. 3080, to Vyâsamuni and occurs in the Mahâbhârata (Böhtlingk).

P. 29, l. 2.—Metre of śloka 130, Vasantatilakâ. According to Śârṅgadhara Paddhati No. 455, the verse belongs to Kṛishṇamiśra, the author of the Prabadhachandrodaya (?).

P. 30, l. 13.—सहामि the Parasmaipada instead of the Âtmanepada is against Pâṇini's rules, but not uncommon in the Panchatantra and epic poetry, see e. g. Tantra III. śloka 50—अन्यच्च used adverbially, 'and besides.'

P. 30, l. 18.—केवला see Tantra IV. and V., note p. 47, l. 10. According to Subhâshitâvali No. 507 and Śârṅgadhara Paddhati No. 277 this verse belongs to Vikramâditya.

P. 31, l. 7.—पुलिन means here the low, sandy bank of a river and may be translated by 'a ford, a watering-place.'

P. 31, l. 16.—Regarding the hiatus, see Tantra IV. and V., note to p. 8, l. 10.

P. 31, l. 20.—Śloka 138 occurs in the Mahâbhârata, see Böhtlingk Indische Sprüche, No. 7109, note.

P. 31, l. 23.—Repeat यत्र with नयाविक्रम.

P. 32, l. 5.—तुङ्गिमा नोपभुज्यते 'a high station is not enjoyed;' *i. e.*, 'is of no use.' The example of a कृतनिश्चयिन् is the little Châtaka, who lives on rain-water only; the example of useless greatness is Indra, the rain-giving god, who, in spite of his greatness, must perform a servile labour for the little bird.

P. 33, l. 4.—भक्ति 'honour, respect.'

P. 33, l. 6.—मन्त्रयत: the Parasmaipada is against Pâṇini's rules, but common in epic poetry.

P. 33, l. 22.—Śloka 147, occurs several times in the Mahâbhârata; see Böhtlingk, Indische Sprüche, No. 71.

P. 34, l. 6.—Sense of śloka 149: 'If misers are callėd rich on account of wealth, which they hoard and hide in their houses without using it, why may not we, the poor, be called rich on account of that

same wealth which is hidden in the houses of rich misers? For we derive just as much benefit from it as they.'

P. 34, l. 9.—Metre of śloka 151, Âryâ.

P. 34, l. 13.—Śloka 152 belongs according to Śârṅgadhara Paddhati No. 310, to Vyâsa.

P. 34, l. 17.—अक्षाणि 'the senses';—निरोध 'restraint.'

P. 34, l. 22.—स्वापतेय 'wealth.' स्वस्य पतिरिति स्वपतिः। तत्र साधु स्वापतेयम् ॥

P. 34, l. 23.—Śloka 157 belongs according to Subhâshitâvali No. 3001, to Vyâsamuni, and occurs according to the note in Mahâbhârata III., 2. 49.

P. 34, l. 25.—Metre of śloka 158, Upajâti.

P. 35, l. 3.—यत्=इति.—मानद्राविण°, a karmadhâraya compound.

P. 35, l. 4.—शर्वः a name of Śiva. In the Veda the word designates a separate deity, whose name is mentioned in the Avesta also amongst the demons (daêvas).

P. 35, l. 8.—Śloka 160 belongs according to Subhâshitâvali, No. 2838, to Vyâsa and occurs according to the note (ibidem) both in the Mahâbhârata and the Râmâyaṇa.

P. 36, l. 12.—करोति 'reproduces.'—संपुटिका lit. 'a box for ornaments, *i.e.*, a collection of witty and beautiful phrases and tales.'

P. 36, l. 18.—Metre of śloka 166, Âryâ.

P. 36, l. 19.—प्रतिभय 'dangerous.'

P. 37, l. 2.—"The violence of a pain, which had become small or even disappeared, increases at the sight of dear ones."

P. 37, l. 9.—यन्मया 'whatever (hard words I may have spoken formerly, etc.).'

P. 37, l. 13.—अस्मद्विधैर्मित्रैर्विद्यमानैः instrumental absolute, see Tantra IV. and V., note to p. 8, l. 25.

P. 37, l. 16.—Metre of śloka 170, Âryâ.

P. 38, l. 20.—Metre of śloka 174, Âryâ. The plural सह्याः स्युः is ungrammatical.

P. 39, l. 5.—Metre of śloka 175, Indravajrâ.

P. 39, l. 21.—Metre of śloka 178, Upajâti,—अभीक्ष्णम् 'repeatedly.'

P. 39, l. 22.—वर्धति the Parasmaipada is against Pâṇini's rules, but common in the Veda and in epic poetry.

P. 40, l. 9.—Metre of śloka 182, Upajâti.

P. 41, l. 3.—अप्राप्तस्यापि तस्य, genitive absolute.

P. 41, l. 6.—Metre of śloka 184, Śârdûlavikrîḍita.

P. 42, l. 3.—Metre of śloka 1, Upajâti.

P. 42, l. 5.—पश्य उलूक°, see note to Tantra IV. and V., p. 8, l. 10.

P. 43, l. 8.—येन तस्य वयं क्रमं इत्यादि 'in order that we may arrange its execution and attain its object.'

P. 43, l. 14.—See Kâmandi Nîtisâra IX., 50.

P. 43, l. 16.—See Kâmandaki Nîtisâra IX., 42.

P. 43, l. 18.—For the first L. of śloka 10 see Kâmandaki Nîtisâra IX., 45*a*.

P. 43, l. 21.—See Kâmandaki Nîtisâra IX., 52.

P. 43, l. 23.—See Kâmandi Nîtisâra IX., 59. सांशयिकम् 'a dangerous, doubtful undertaking.'

P. 43, l. 25 and 26.—युध्यताम् gen. pl. part. pres. Parasmaipadâ, according to the vedic and epic use. उपायत्रितयादूर्ध्वम् 'after (having tried) the three (first) means of success.'

P. 44, l. 5.—See Kâmandaki Nîtisâra X., 28; Manu. VII., 206.

P. 44. l. 11.—See Kâmandaki Nîtisâra X., 32.

P. 44, l. 13.—See Kâmandaki Nîtisâra X., 33.

P. 44, l. 15.—See Kâmandaki Nîtisâra X., 35.

P. 44, l. 17.—See Kâmandaki Nîtisâra X., 31.

P. 44, l. 20.—See Kâmandaki Nîtisâra IX., 49.

P. 45, l. 3.—See Kâmandaki Nîtisâra IX., 41.

P. 45, l. 5.—See Kâmandaki Nîtisâra VIII., 15.

P. 45, l. 9.—Taken from Śiśupâlavadha II., 54.

P. 45, l. 14.—See Kâmandaki Nîtisâra XIII., 16.

P. 45, l. 17.—यथा कण्ठीरवो नागम् seems to refer to some story told by the Bhâradvâjas in their sûtra on Nîti or Dharma. We have still the Śrauta and Gṛihya Sûtras of this Vedic school, which studied a redaction of the Black Yajurveda. Compare Kâmandaki Nîtisâra IX., 56.

P. 45, l. 19.—Śloka 31, refers to the story, told Mahâbhârata IV. 22. 27. seqq, according to which Bhîmasena went in Draupadî's place to the dancing-hall and slew first the Kîchaka, who came to the rendezvous, and afterwards his relatives.

P. 45, l. 23.—Construe यस्य तेजस्तेजस्वितेजसां शमनं नास्ति, etc.

P. 46, l. 8.—विना यानम् 'but only marching.'

P. 46, l. 11.—In the months Kârttika and Chaitra, because then no rain falls. But in other treatises on Nîti other months are recommended; compare Manu VII., 182.

P. 46, l. 20.—द्वितीयम् 'the second (measure),' because, in the enumerations of the उपायाः, यानम् usually occupies the second place.

P. 46, l. 23.—Metre of śloka 43, Mâlinî. This verse belongs according to Subhâshitâvali No. 2935 to Masûrâksha.

P. 47, l. 14.—See Kâmandaki Nîtisâra IX., 55.

P. 48, l. 3.—एकस्मिन्स्थाने तिष्ठन्तीत्येकस्थाः । 'close-standing.'

P. 48, l. 4.—Compare Mahâbhârata V., 36, 62.

P. 48, l. 6.—See Mahâbhârata V., 36, 64.

P. 48, l. 8.—शक्यम् viz. हिंसितुम्.

P. 48, l. 11.—Attributed to Vyâsa, Subhâshitâvali No. 2656.

P. 48, l. 17.—कृशे-गौरवम् 'who has any esteem for a weak man?'

P. 48, l. 18.—एकान्तः 'the only course (of action possible).'

P. 48, l. 20.—See Kâmandaki Nîtisâra IX., 46.

P. 48, l. 24.—Śloka 60 agrees still better with the verse of the Mahâbhârata, cited above, l. 4, for śloka 54.

P. 49, l. 7.—तत्परीक्षार्थम् "that (has been done) in order to examine (them)."

P. 49, l. 12.—द्वैधीभाव 'double-dealing, treachery.'

P. 49, l. 13.—दर्शयद्भिः 'by those, who excite (his cupidity).'

P. 49, l. 15.—एकदा "sometimes."

P. 49, l. 21.—एकभावः "honest, sincere."

P. 50, l. 3.—Taken from the Mahâbhârata V., 34. 34.

P. 50, l. 8.—तीर्थानि 'helps.'

P. 50, l. 13.—Śloka 69 is taken from Mahâbhârata III., 5. 38.

P. 50, l. 15-17.—आयुक्तकर्मा 'an official.'—प्रधानम् "excellence;" —यदि must be understood from the preceding sentence.

अन्तर्वासिक 'the superintendent of the harem.'

प्रशासक, usually प्रशास्तृ, is perhaps 'the spiritual guide.'

P. 50, l. 18 and 19.—प्रदेष्टृ 'the chief justice; ज्ञापक 'the master of requests; करपाल 'the receiver-general of taxes.'

P. 50, l. 21.—स्थानचिन्तक 'the quarter-master.'

P. 50, l. 26.—There is a play on the word तीर्थ 'a royal official,' and 'a flight of steps leading into the water.'

P. 51, l. 3.—पङ्क्त्यां विकिरन्तीति विष्किराः । 'the gallinaceous birds.'

P. 51, l. 10.—See Kâmandaki Nîtisâra I., 10.

P. 51, l. 13.—Ślokas 74-75 occur in the Mahâbhârata V., 33. 79-80 and XII., 57. 43-45. अप्रवक्तारम् 'who does not or is unable to teach.'

P. 51, l. 20.—वर्तिते 'after (a picture of) the globe of the earth with its seven islands had been drawn.'

P. 51, l. 21.—आपूरितेषु to be taken with हेमकुम्भेषु दीपेषु and वाद्येषु and to be translated thus, after the golden (coronation) jars had been filled (with water), after the lamps had been filled (with oil and been lit), and the trumpets had been filled (with wind) *i.e.*, the trumpeters had begun to play.

P. 51, l. 22.—समुदितमुखेषु 'with one voice, all at once.'

P. 52, l. 2.—श्वेतभिक्षुः probably 'an ascetic of the Śvetâmbara sect, a white-robed ascetic.'

P. 52, l. 14.—यदि must be understood with स्यात्.

P. 52, l. 22.—भास्वन्तो बहवः according to the Vishṇupurâṇa seven suns will appear at the end of the Kalpa and burn the world [Benfey].

P. 53, l. 23.—Attributed to Vyâsa, Subhâshitâvali, No. 2752.

P. 54, l. 1.— See Mahâbhârata V., 37. 17.

P. 54, l. 4.—Ślokas 85 and 86 are found Manu VII., 212-213.

P. 55, l. 1.—निरूपितः 'was deputed' (to go) to, etc.

P, 55, l. 6.—तस्य वचनस्य श्रद्धेयत्वात् 'in order (to make) his words credible.'

P. 56, l. 20.—कुजन्मन् 'a tree;' compare कुज. This śloka, as well as the following two, probably, are taken from the chapter on evidence of some Smṛiti. Śloka 93 is the only passage, I know of, that refers to temple-property.

P. 56, l. 23 and 24.—प्रत्यक्षम् 'before the eyes (of the owner)'. भुक्ति 'possession.'—प्रमाण 'proof (of ownership);' अक्षराणि=लेख्यम्, 'a document.'

P. 57, l. 9.—Ślokas 95-97 are attributed to Vyâsa, Subhâshitâvali No. 2956, 3008.

P. 57, l. 11.—A pun on कौपीन; taken with श्वनः पुच्छ it means लिङ्ग, and taken with पाण्डित्य, it means पाप.

P. 57, l. 14.—See Mahâbhârata XII. 181, 7. (Note to Subhâshitâvali No. 2955).

P. 57, l. 16.—From the Mahâbhârata, see Böhtlingk, Indische Sprüche, No. 6581.

P. 57, l. 19.—Construe धर्महीना [यद्यपि] परार्थाय [परमार्थाय धर्मचरणाय] मीश्वरेण सृष्टा[स्तथापि] पशवो यथा मूत्रपुरीषा र्थमाहाराय च केवलं [भवन्ति].

P. 58, l. 17.—परत्र भवं सुखं इति परत्रम् । स्वर्ग इत्यर्थः. This irregular formation occurs in another passage of the Panchatantra, Tantra IV., śloka 107.

P. 58, l. 21.—अश्वानृते 'a falsehood (*i. e.*, a wrong decision about a horse, etc.' In the Smṛitis, where similar verses repeatedly occur (*e.g.*, Manu VIII. 98-99), they refer to false evidence.

P. 58, l. 24.—स त्याज्यः, *i. e.*, प्राड्विवाको राज्ञा ॥ न्यायो वेत्यादि 'or let his decision declare the truth, *i.e.*, if his decision is not just.'

P. 59, l. 10.—कः कोत्र is the ancient Indian phrase for calling servants, which still survives in the Anglo-Indian, "*Kai hai*," and in similar idioms of the vernaculars.

P. 59, l. 16.—रोहते Âtmanepada against the grammar, but according to the epic usage; the śloka is taken from the Mahâbhârata XIII., 104. 33. It occurs also Mahâ bhârata V., 34. 78.

P. 59, l. 21.—Metre of ślokas 112 and 113, Vaṁśastha.—अनायतिक्षमम् "not good for the future."

P. 60, l. 8.—छागलात् 'of his goat.' Regarding this use of the ablative, see Speijer, Sanskrit Syntax § 96 Rem. 1.

P. 60, l. 16.—यक्ष्यामि; a Śrautâgnihotrin must perform every year animal sacrifices, see Manu IV., 26.

P. 60, l. 21.—हिमपातो व्यर्थतां नीयते "we shall be able to defy the cold rain."

P. 60, l. 25.—श्वान=श्वन्.

P. 61, l. 16.—The Brâhmaṇa thinks that the beast is an 'evil spirit,' because everybody, whom he meets, takes it for some unclean creature.

P. 61, l. 22.—Metre of śloka 119, Âryâ.

P. 62, l. 15.—शुष्ककलह 'a pretended dispute.'

P. 62, l. 25.—भीतः शत्रुः पला यनपरः पुण्यैर्लभ्यते '(To find) the foe, timid

and intent on flight, is a reward for meritorious deeds (performed in a former life).'

P. 62, l. 26.—छिद्रम् "an opportunity (for attack)."

P. 63, l. 1.—Regarding śloka 124, see above note to p. 8, l. 21.

P. 63, l. 19.—Metre of śloka 126, Upajâti,—पतंगवृत्तिः 'one who behaves like a moth,' *i.e.*, who spontaneously goes to meet a danger, just as the moth flies towards a lamp.

P. 63, l. 25.—रक्षितैस्तैः instrumental absolute.—धनं पुनः [भवेदिति शेषः].

P. 64, l. 6.—The answers given by the first four Ministers of Arimardana to the question of their master, What is to be done with the captive Sthirajîvin? are somewhat singular. Instead of stating how he is to be treated, they give lectures on the excellence of kindness, treachery, bribing and of the employment of force respectively, just as the Ministers of Meghavarṇa in the beginning of the book. These answers are, however, intended to indicate indirectly the manner how Sthirajîvin is to be used. Raktâksha, apparently, means to say, "Hear Sthirajîvin's advice; he spoke to his own master in favour of peace, and that is the right advice. Therefore treat him well and use him to make peace with thy enemy," (see line 26) while Krûrâksha holds, that the captive is to be used to create discord in the enemy's camp, Dîptâksha that he is to bribe the opposite party, and Vakranâsa that the war is to be continued and Sthirajîvin is to be killed without mercy.

P. 65, l. 1.—"The heron, who wades cautiously and gently through the water, as if he were afraid to hurt any small animals, still deludes and destroys his enemies, the fish, by this very gentleness."

P. 65, l. 12.—Râma bribed Vibhîshaṇa, Râvaṇa's brother, by the promise of the throne of Lankâ, to tell about his brother's strength.

P. 65, l. 14.—Râkshasa, originally the Minister of Nanda, became, after the death of the latter, the adviser of Malayaketu, the son of Parvatendra. By the stratagems of Chânakya he was rendered an object of suspicion to this prince and was consequently dismissed by him. See H. H. Wilson, Hindu Theatre, II., p. 127 ff.

P. 65, l. 19.—Regarding śloka 140, see Tantra IV. and V., note to p. 34, l. 17.

P. 66, l. 2.—साम्यं नी 'to satisfy.'—अग्निम् scil. वाडवम् compare also Tantra IV. and V., note to p. 8, l. 3.

P 66, l. 15.—रिपोः is used here instead of रिपौ. Regarding the genitive interchangeable with the locative and dative, see Speijer, Sanskrit Syntax § 131.

P. 66, l. 22.—कर्मणा 'in reality.'

P. 66, l. 24.—वीर्यधनप्रदैः । वीर्यमेव धनमिति वीर्यधनम् । तत्प्रददतीति वीर्यधनप्रदास्तैः ॥

P. 67, l. 1.—See Kâmandaki Nîtisâra, XIII., 14. हेलाकृष्टस्फुरत्खड्ग-दीप्तांशुपरिपिञ्जरैः "(with his arms) which are coloured reddish-brown by the shining rays reflected from his glittering sword that has been drawn in fury."

P. 67, l. 4.—अन्याङ्कसुप्तैव "(though) she just slept in another's arms."

P. 67, l. 5.—See Kâmanadaki Nîtisâra, XIII., 11.

P. 67, l. 12.—उपादत्ते "attacks, seizes."

P. 67, l. 12.—See Kâmandaki Nîtisâra VIII., 68.

P. 67, l. 15.—Metre of śloka 155, Upajâti.—भयेन युक्ता, "Those who, themselves filled with fear, (cruelly, etc.)" It is, however, very doubtful, whether this reading, which is given by the MSS., is correct.

P. 68, l. 1.—Attributed to Vyâsa, Subhâshitâvali, No. 2988, see also the note on that passage.

P. 68, l. 13.—मणिरेव दीप इति मणिदीपः 'a jewel-lamp' where the sparkling of a precious stone takes the place of the burning wick.

P. 68, l. 15.—Regarding śloka 161, see Tantra IV. and V., note to śloka 90, p. 63, l. 21.

P. 68, l. 19.—परिग्रहासंमतेन "against the advice of my followers."

P. 69, l. 15.—स्वदुर्गमध्ये; the crow is the Chaṇḍâla among the birds and hence not worthy to live in the town. His proper place is outside the gates in the Vâḍî.

P. 69, l. 17.—एतावत्कालं यावत् "for so long a time, up to this ime."

P. 69, l. 19.—Metre of śloka, 164, Vaṁśastha.

P. 70, l. 8.—समयधर्मः 'a covenant, an agreement.'

P. 71, l. 6.—प्रतिलोमतः सेवन्ते वैपरीत्येनासन्तं नयमाश्रित्य सेवन्त इत्यर्थः.

P. 71, l. 19.—समागमनम् '(our) meeting.'

P. 71, l. 24.—यस्य यस्य..........अक्रियमाणस्य must be taken as a genitive absolute; "if a deed, especially one that promises a (good) result, etc."

P. 72, l. 9.—Metre of śloka 172, Śârdûlavikrîḍita.—The verse alludes to Bhîma's serving as cook in the palace of the king of the Matsyas during the exile of the Pâṇḍavas, see Mahâbhârata IV., 8. 1. seqq.

P. 72, l. 17.—Metre of ślokas 174 and 175, Śârdûlavikrîḍita. —Yudhishṭhira, the son of Yama (धर्मात्मज,) served in the palace of King Virâṭa, in the guise of a Brâhmana, see Mahâbhârata IV., 7. 1. seqq. The story of Draupadî's serving as a सैरन्ध्री is told, ibidem IV. 9. 1. seqq.

P. 72, l. 23.—विदशा 'an evil condition,' compare विकर्मन् 'an evil act, improper occupation' and similar words.

P. 73, l. 5.—Metre of ślokas 177 and 179, Vasantatilakâ. Śloka 177 is taken from the Bhartṛihari's Nîtiśataka, vs. 26 (Telang).

P. 73, l. 21.—Metre of śloka 180, Hariṇî.

P. 73, l. 24.—भविष्यत् "destined (to prosper)."

P. 73, l. 25.—तत्तव भविष्यत इत्यादि । "Thus I knew by the errors (of your enemy) that you were destined (to prosper) and that he was destined to be conquered. (For) wise men know the fate of those who are destined (to prosper) and of those who are destined to fail from the course of their actions."

P. 74, l. 1.—Regarding śloka 181, see above note to p. 18, l. 17.

P. 74, l. 7.—Attributed to Vyâsa, Subhâshitâvali No. 3094, and found (see note *ibidem*) Mahâbhârata V. 35. 40.

P. 74, l 11.—Śloka 184 is attributed to Vyâsa, Subhâshitâvali No. 3096, and found (see note *ibidem*) Mahâbhârata II., 81. 9 and V. 34, 82. Compare the saying, Quem Deus vult perdere, prius dementat.

THE END.

BOMBAY: PRINTED AT THE EDUCATION SOCIETY'S PRESS, BYCULLA.

# BOMBAY SANSKRIT SERIES.

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. Bühler ... ... ... ... ... ... .. ... ... | 0 | 6 | 6 |
| No. II.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. The Sanskrit Text and various Readings, Part I. ... ... .. ... ... ... . ... ... | 1 | 4 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. Bühler ... .. ... ... ... ... ... ... | 0 | 6 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. Kielhorn ... ... ... ... ... ... ... ... ... ... | 0 | 10 | 0 |
| No. V.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part I., Cantos I.—VI. ... ... ... ... ... ... ... ... | 1 | 4 | 0 |
| No. VI.—Mâlavikâgnimitra, a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... | 2 | 2 | 0 |
| No. VII.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII. ... ... ... ... ... | 1 | 4 | 0 |
| No. VIII.—The Raghuvaṁśa of Kâlidâsa with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part II., Cantos VII.—XIII. ... ... ... .. ... .. | 1 | 8 | 0 |
| No. IX.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribháshâs XXXVIII.—LXIX ... ... ... ... | 1 | 4 | 0 |
| No. X.—The Daśakumâracharita of Daṇḍin, Part I. Edited, with Critical and Explanatory Notes, by Dr. Bühler ... | 0 | 14 | 0 |
| No. XI.—The Nîtiśataka and Vairâgyaśataka of Bhartrihari, with extracts from two Sanskrit Commentaries. Edited, with Notes, by Kâshinâth Trimbak Telang, M.A. ... | 1 | 0 | 0 |
| No. XII.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs LXX.—CXXII. ... ... ... ... ... ... | 1 | 4 | 0 |
| No. XIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part III., Cantos XIV.—XIX ... ... ... ... ... ... | 1 | 4 | 0 |
| No. XIV.—Vikramâṅkadeva-Charita. Life of King Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa. Edited, with an Introduction, by Dr. G. Bühler ... ... ... ... ... ... ... ... ... ... ... | 1 | 0 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XV.—Mâlatî-Mâdhava: a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R. G. Bhandarkar, M.A. (In the Press.) | | | |
| No. XVI.—Vikramorvaśî: a Drama by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... ... .. .. ... | 2 | 8 | 0 |
| No. XVII.—Hemachandra's Deśînâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R. Pischel and Dr. G. Bühler. Part I. Text and Critical Notes by Professor Pischel ... ... .. ... ... | 3 | 4 | 0 |
| No. XVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. I. Part I. (In the Press.) | | | |
| No. XIX. Ditto ditto by ditto. Vol. I. Part II. ... ... | 2 | 0 | 0 |
| No. XX. Ditto ditto by ditto. Vol. I. Part III. ... ... | 2 | 0 | 0 |
| No. XXI. Ditto ditto by ditto. Vol. II. Part I. ... ... | 2 | 0 | 0 |
| No. XXII. Ditto ditto by ditto. Vol. II. Part II. ... ... | 2 | 0 | 0 |
| No. XXIII. Vâsishṭhadharmaśâstram. Edited, with Notes, by Dr. A. A. Führer ... ... ... ... ... ... ... ... ... | 0 | 12 | 0 |
| No. XXIV.—Kâdambarî by Bâṇa and his Son. Vol. I. Sanskrit Text, complete. Edited by Dr. P. Peterson ... ... ... | 1 | 8 | 0 |
| Do. Vol. II. Introduction and Notes, by do. ... ... ... | 2 | 8 | 0 |
| Ditto do. Vols. I. and II. (Bound together) ... ... ... | 4 | 0 | 0 |
| No. XXV.—Kîrti-Kaumudî. Edited, with Notes, by Prof. A. V. Kathavate... . ... ... ... ... ... ... ... .. ... | 1 | 4 | 0 |
| No. XXVI.—Vyâkarâṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol II. Part III. ... ... .. ... ... | 2 | 0 | 0 |
| No. XXVII.—Mudrârâkshasa, by Viśâkhadatta, with the Commentary of Dhuṇḍhiraja. Edited, with Notes, by K. T. Telang ... ... ... ... ... ... ... ... ... ... | 1 | 14 | 0 |
| No. XXVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. III. Part I. ... ... ... ... | 2 | 0 | 0 |
| No. XXIX.—Ditto do. of do. by do. Vol. III. Part II. ... | 2 | 0 | 0 |
| No. XXX.—Ditto do. of do. by do. Vol. III. Part III. ... | 2 | 0 | 0 |
| No. XXXI.—Subhâshitâvali of Vallabhadeva. Edited by Dr. P. Peterson and Pandit Durgaprasad ... ... ... ... | 5 | 0 | 0 |
| No. XXXII.—Tarka-Kaumudî of Laugâkshi Bhâskara. Edited by Professor M. N. Dvivedi ... ... ... ... ... ... ... | 0 | 12 | 0 |
| No. XXXIII.—Hitopadeśa of Nârâyaṇa. Edited by Dr. P. Peterson... ... ... ... ... ... ... .. ... ... ... | 1 | 10 | 0 |
| No. XXXIV.—The Gaudavaho, by Vâkpati. Edited by Shankar P. Pandit ... ... ... ... ... ... ... ... ... | 5 | 8 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XXXV.—Mahânârâyaṇa Upanishad. Edited by Colonel G. A. Jacob ... ... ... ... ... ... ... ... ... ... | 0 | 11 | 0 |
| No. XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr. P. Peterson... ... ... ... ... | 4 | 0 | 0 |
| No. XXXVII.—Śarnagadhara Paddhati. Edited by Dr. P. Peterson. Vol. I. ... ... ... ... ... ... ... ... ... | 5 | 6 | 0 |
| No. XXXVIII.—Naishakarmyasiddhi. Edited by Col. G. A. Jacob ... ... ... ... .. ... ... ... .. ... ... | 3 | 0 | 0 |
| No. XXXIX.—A Concordance to the principal Upanishads and Bhagvadgîtâ, by do. ... ... ... ... ... ... ... ... | ... | ... | |
| No. XL.—Eleven Atharvaṇa Upanishads, with Dipikas, by do. | 2 | 8 | 0 |

## WORKS IN THE PRESS.

Harshacharita, edited by A. Führer.

Atharva-Veda, edited by S. P. Pandit.

Bhîmâchârya's Nyâyakośa, 2nd Edition.

An Edition of the Mṛichchhakaṭikâ, by Mr. N. B. Godbole.

An Edition of Daṇḍin's Daśakumâracharita, Part II., by Dr. P. Peterson.

An Edition of Patañjali's Yogasûtras, with the Scholium of Vyâsa and the Commentary of Vâchaspati, by Mahâmahopâdhyâya Rajaram Shastri Bodas.

Parâśara Smṛiti, with the Commentary of Sâyana-Mâdhavâchârya, by Vaman Shastri Islampurkar and Shamrao Vithal.

## WORKS UNDERTAKEN.

An additional Part of the Vyâkaraṇa-Mahâbhâshya of Patañjali, containing an introduction and indices, by Dr. F. Kielhorn.

An Edition of the Kâvya-prakâśa, by Professor A. V. Kathavate.

An Edition of Tarkasaṁgraha, by Mr. Y. V. Athlye.

An Edition of the Veṇîsaṁhâra, by Mr. L. R. Vaidya.

An Edition of the Shatprâbhṛitaṭîkâ, by Mr. K. B. Pathak.

An Edition of the Uttararâmacharita, by Dr. R. G. Bhandarkar and Mr. S. R. Bhandarkar.

An Edition of the 7th Maṇḍala of the Ṛigveda, with Sâyaṇa's Commentary, by Dr. P. Peterson.

Keśava Miśra's Tarkabhâshya, with the Commentary of Chinnabhaṭṭa, edited with Notes, Critical and Explanatory, by Dr. R. G. Bhandarkar.

Varadarâja's Târkikarakshâ, with the Perpetual Commentary, edited with Notes, Critical and Explanatory, by Dr. R. G. Bhandarkar.

Kṛishṇamiśra's Prabodhachandrodaya, with a Commentary and Notes, edited by Mr. Shridhar Ganesh Joshi.

An Edition of the Rekhâ Gaṇita, by Mr. H. H. Dhruva.

An Edition of the Syâdvâdamañjarî of Hemachandra, by Mr. Manilal Dvivedi.

An Edition of the Bhaṭṭi Kâvya, by Mr. Kamalashankar P. Trivedi.

G. C. Book Depôt,

*Bombay, 1st May,* 1891.

Bombay Sanskrit Series.

No. I.

---

# PANCHATANTRA IV. & V

Price 6 Annas

The Department of Public Instruction, Bombay.

# PAÑCHATANTRA IV. & V

EDITED, WITH NOTES,

BY

Dr. G. BÜHLER, C.I.E.

Fourth Edition, Revised.
5,000 Copies.



Bombay:
GOVERNMENT CENTRAL BOOK DEPÔT.

1891.

*Price 6 Annas.*
BOMBAY SANSKRIT SERIES No. I.

अथेदमारभ्यते लब्धप्रणाशं नाम चतुर्थं तन्त्रं यस्यायमादिमः श्लोकः ।

समुत्पन्नेषु कार्येषु बुद्धिर्यस्य न हीयते ।
स एव दुर्गं तरति जलस्थो वानरो यथा ॥ १ ॥

तद्यथानुश्रूयते ।

अस्ति कस्मिंश्चित्समुद्रोपकण्ठे महाञ्जम्बूपादपः सदाफलः । तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म । तत्र च तस्य तरोरधः कदाचित्करालमुखो नाम मकरः समुद्रसलिलान्निष्क्रम्य सुकोमलवालुकासनाथे तीरोपान्ते निविष्टः । ततश्च रक्तमुखेन स प्रोक्तः । भो भवानभ्यागतोतिथिः । तद्भक्षयतु मया दत्तान्यमृतकल्पानि जम्बूफलानि । उक्तं च ।

प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः ।
वैश्वदेवान्तमासन्नः सोतिथिः स्वर्गसंक्रमः ॥ २ ॥

न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च ।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥ ३ ॥

दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम् ।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम् ॥ ४ ॥

एवमुक्त्वा तस्य जम्बूफलानि प्रयच्छति । सोपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोपि स्वभवनमगात् । एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायाश्रितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः । सोपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति । अथान्यतमे दिवसे तया स पृष्टः । नाथ क्वैवंविधान्यमृतकल्पानि फलानि प्राप्नोति भवान् । स आह । भद्रे ममास्ति परमसुहृद्रक्तमुखो नाम वानरः । स प्रीतिपूर्वमिमानि फलानि प्रयच्छति नित्यम् । अथ तयाभिहितम् । यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति तस्य हृदयममृतमयं भविष्यति ।

तद्यदि मया भार्यया ते प्रयोजनं ततस्तस्य हृदयं मम प्रयच्छ येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान्भुनज्मि । स आह । भद्रे मा मैवं वद । यतः स प्रतिपन्नोस्माकं भ्राता । अपरं व्यापादयितुमपि न शक्यते । तत्त्यजैनं मिथ्याग्रहम् । उक्तं च ।

एकस्थाने प्रसूते वागन्यस्मिञ्जननी नृणाम् ।
वाग्जातमधिकं प्रोचुः सोदर्यादपि बान्धवात् ॥ ५ ॥

अथ मकर्याह । त्वया कदाचिदपि वचनं मम नान्यथा कृतम् । तन्नूनं सा वानरी भविष्यति यतस्तस्या अनुरागतः सकलमपि दिनं तत्र गमयसि । तत्त्वं ज्ञातः सम्यङ्मया । यतः ।

साह्लादं वचनं प्रयच्छसि न मे नो वाञ्छितं किंचन
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु ।
कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादरश्चुम्बने
तत्ते धूर्त हृदि स्थिता प्रियतमा काचिन्ममैवापरा ॥ ६ ॥

सोपि पत्न्याः पादोपसंग्रहं कृत्वाङ्कोपरि निधाय तस्याः कोपकोटिमापन्नायाः पत्न्याः सुदीनमुवाच यत् ।

मयि ते पादपतिते किंकरत्वमुपागते ।
प्रिये कामातुरः कोपं कान्ते कोन्योपनेष्यति ॥ ७ ॥

सापि तद्वचनमाकर्ण्याश्रुप्लुतमुखी तमुवाच ।

सार्धं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकमस्ति न कथंचिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ ८ ॥

अपरं सा यदि तव वल्लभा न भवति तत्किं मया भणितेपि तं न व्यापादयसि । अथ यदि स वानरस्तत्कस्तेन सह महास्नेहः । तत्किं बहुना । यदि तस्य हृदयं न भक्षयामि तन्मया प्रायोपवेशनं कृतं विद्धि । एवं तस्यास्तन्निश्चयं ज्ञात्वा चिन्ताव्याकुलितचित्तः स प्रोवाच । अथवा साध्विदमुच्यते ।

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ ९ ॥

तत्किं करोमि । कथं स मे वध्यो भविष्यति । इति विचिन्तयन्वानरपार्श्वमगमत् । वानरोपि चिरादायान्तं तं सोद्वेगमवलोक्य प्रोवाच । भो मित्र किमत्र विरलवेलायां समायातः । कस्मात्साह्लादं नालापयसि न सुभाषितानि पठसि । स आह । मित्र अहं तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः । भोः कृतघ्न मा मे संमुखं मुखं दर्शय यतस्त्वं मित्रं नित्यमेवोपजीव्यागच्छसि तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि न करोषि । तत्ते प्रायश्चित्तमपि नास्ति । उक्तं च ।

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १० ॥

तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमागच्छ । अथवा त्वया सह मे परलोके दर्शनम् । तदहं तयैवं प्रोक्तस्तव सकाशमागतः । तदद्य तया सह कलहवत इयती वेला मे विलग्ना । तदागच्छ मे गृहम् । तव भ्रातृपत्नी रचितचतुष्का प्रगुणितमणिमाणिक्या द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति । मर्कट आह । भो मित्र युक्तमभिहितं मद्भ्रातृपत्न्या । उक्तं च ।

वर्जयेत्कौलिकाकारं मित्रं प्राज्ञतरो नरः ।
आत्मनः संमुखं नित्यं य आकर्षति लोलुपः ॥ ११ ॥

तथा च ।

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ १२ ॥

परं वयं वनचराः । युष्मदीयं जलान्ते गृहं तत्कथमपि न शक्यते तत्र गन्तुम् । तस्मात्तामपि मे भ्रातृपत्नीमत्रानय येन तस्याः प्रणम्याशीर्वादं गृह्णामि । स आह । भो मित्र अस्ति समुद्रान्ते रम्ये पुलिनप्रदेशेस्मद्गृहम् । तन्मम पृष्ठमारूढः सुखेनाकृतभयो गच्छ । सोपि तच्छ्रुत्वा सानन्दमाह । भद्र यद्येवं तत्किं विलम्ब्यते । त्वर्यताम् । अहं तव पृष्ठमारूढः । तथानुष्ठिते गच्छन्तमगाधजले मकरमवलोक्य भय-

त्रस्तमना वानरः प्रोवाच । भ्रातः शनैःशनैर्गम्यताम् । जलकल्लोलैः प्लावितं मे शरीरम् । तदाकर्ण्य मकरश्चिन्तयामास । असावगाधं जलं प्राप्तो वशः संजातो मत्पृष्ठगतस्तिलमात्रमपि चलितुं न शक्नोति । तस्मात्कथयामि निजाभिप्रायं येनाभीष्टदेवतास्मरणं करोति । आह च । मित्र त्वं मया वधाय समानीतो भार्यावाक्याद्विश्वास्य । तत्स्मर्यतामभीष्टदेवता । स आह । भ्रातः किं मया तस्यास्तवापि चापकृतं येन मे वधोपायश्चिन्तितः । मकर आह । भोस्तस्यास्तावत्तव हृदयस्यामृतमयरसफलास्वादनामृष्टस्य भक्षणार्थं दोहदः संजातः । तेनैतदनुष्ठितम् । वानर आह । भद्र यद्येवं तत्किं त्वया मम तत्रैव न व्याहृतं येन स्वहृदयं जम्बूकोटरे सदैव मया सुगुप्तं कृतं तद्भ्रातृपत्न्या अर्पयामि । त्वयाहं शून्यहृदयोत्र कस्मादानीतः । तदाकर्ण्य मकरः सानन्दमाह । भद्र यद्येवं तदर्पय मे हृदयं येन सा दुष्टपत्नी तद्भक्षयित्वानशनादुत्तिष्ठति । अहं त्वां तमेव जम्बूपादपं प्रापयामि । एवमुक्त्वा निवर्त्य जम्बूतलमगात् । वानरोपि कथमपि जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान् । ततश्च दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास । अहो लब्धाः प्राणास्तावत् । अथवा साध्विदमुच्यते ।

न विश्वसेदविश्वस्ते विश्वस्तेपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १३ ॥

तन्ममैतदन्यत्संततिदिनं संजातम् । इति चिन्तयानमनन्तरं मकर आह । भो मित्र अर्पय तद्धृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति । अथ विहस्य निर्भर्त्सयन्वानरस्तमाह । धिङ्मूर्ख विश्वासघातक किं कस्यचिद्धृदयद्वयं भवति । तद्गम्यताम् । जम्बूवृक्षस्याधस्तान्न भूयोपि त्वयात्रागन्तव्यम् ।

उक्तं च यतः ।

सकृद्दुष्टं च यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १४ ॥

तच्छ्रुत्वा मकरः सविलक्षं चिन्तितवान् । अहो मयातिमूढेन

किमस्य स्वचित्ताभिप्रायो निवेदितः । तद्यद्यसौ पुनरपि कथंचिद्विश्वासं गच्छति तद्भूयोपि विश्वासयामि । आह च । मित्र हास्येन मया तेभिप्रायो लब्धः । तस्या न किंचित्तव हृदयेन प्रयोजनम् । तदागच्छ प्राघूर्णकन्यायेनास्मद्गृहम् । ते भ्रातृपत्नी सोत्कण्ठा वर्तते । वानर आह । भो दुष्ट गम्यताम् । अधुना नाहमागमिष्यामि ।

उक्तं च ।

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम् ॥ १५ ॥

मकर आह । कथमेतत् । स आह ।

## कथा १.

अस्ति कस्मिंश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म । स कदाचिद्दायादैरुद्वेजितोरघट्टघटीमारुह्य निष्क्रान्तः । अथ तेन चिन्तितम् । यत्कथं तेषां दायादानां मया प्रत्यपकारः कर्तव्यः ।

उक्तं च ।

आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥ १६ ॥

एवं चिन्तयन्बिले प्रविशन्तं कृष्णसर्पमपश्यत् । तं दृष्ट्वा भूयोप्यचिन्तयत् । यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदं करोमि ।

उक्तं च ।

शत्रुभिर्योजयेच्छत्रुं बलिना बलवत्तरम् ।
स्वकार्याय यतो न स्यात्काचित्पीडात्र तत्क्षये ॥ १७ ॥

तथा च ।

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ॥ १८ ॥

स एवं परिभाव्य बिलद्वारं गत्वा तमाहूतवान् । एह्येहि प्रियदर्शन एहि । तच्छ्रुत्वा सर्पश्चिन्तयामास । एष मामाह्वयति । स स्वजात्यो न भवति यतो नैषा सर्पवाणी । अन्येन केनापि सह मम मर्त्यलोके संधानं नास्ति । तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोयं भविष्यति ।

उक्तं च ।

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः ॥ १९ ॥

आः कदाचित्कोपि मन्त्रवाद्योषधिधरो वा मामाहूय बन्धने क्षिपति । अथवा कश्चित्पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थे मामाह्वयति । आह च । भोः को भवान् । स आह । अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमागतः । तच्छ्रुत्वा सर्प आह । भो अश्रद्धेयमेतद्यत्तृणानां वह्निना सह संगमः ।

उक्तं च ।

यो यस्य जायते वध्यः स स्वप्नेपि कथंचन ।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि ॥ २० ॥

गङ्गदत्त आह । भोः सत्यमेतत् । स्वभाववैरी त्वमस्माकम् । परं परपरिभवात्प्राप्तोहं ते सकाशम् । उक्तं च ।

सर्वस्वनाशे संजाते प्राणानामपि संशये ।
अपि शत्रुं प्रणम्यापि रक्षेत्प्राणधनानि च ॥ २१ ॥

सर्प आह । कथय कस्मात्ते परिभवः । स आह । दायादेभ्यः । सोप्याह । क्व ते आश्रयो वाप्यां कूपे तडागे ह्रदे वा । तत्कथय स्वाश्रयम् । तेनोक्तम् । पाषाणचयनिबद्धे कूपे । सर्प आह । अहो अपदा वयम् । तर्हि नास्ति मम तत्र प्रवेशः । प्रविष्टस्य च तत्र स्थानं नास्ति यत्र स्थितस्तव दायादान्व्यापादयामि । तद्गम्यताम् ।

उक्तं च ।

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ २२ ॥

गङ्गदत्त आह । भोः समागच्छ त्वम् । अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि । तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति । तत्र स्थितस्त्वं लीलया दायादान्व्यापादयिष्यसि । तच्छ्रुत्वा सर्पो व्यचिन्तयत् । अहं तावत्परिणतवयाः । कदाचित्कथंचिन्मूषकमेकं प्राप्नोमि । तत्सुखावहो जीवनोपायोयमनेन कुलाङ्गारेण मे दर्शितः । तद्गत्वा तान्मण्डूकान्भक्षयामीति ।

अथवा साध्विदमुच्यते ।

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः ।
स हि सर्वसुखोपायां वृत्तिमावरयेद्बुधः ॥ २३ ॥

एवं विचिन्त्य तमाह । भो गङ्गदत्त यद्येवं तदग्रे भव येनागच्छामि । गङ्गदत्त आह । भोः प्रियदर्शन अहं त्वां सुखोपायेन तत्र नेष्यामि स्थानं च दर्शयिष्यामि । परं त्वयास्मत्परिजनो रक्षणीयः । केवलं यानहं दर्शयामि त्वया त एव भक्षणीया इति । सर्प आह । सांप्रतं त्वं मे मित्रं जातम् । तन्न भेतव्यम् । तव वचनेन भक्षणीयास्ते दायादाः । एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः । अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः । ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः । ते च तेन शनैःशनैर्भक्षिताः । अथ मण्डूकाभावे सर्पेणाभिहितम् । भद्र निःशेषितास्ते रिपवस्तत्प्रयच्छान्यन्मे किंचिद्भोजनं यतोहं त्वयात्रानीतः । गङ्गदत्त आह । भद्र कृतं त्वया मित्रकृत्यम् । तत्सांप्रतमनेनैव घटिकायन्त्रमार्गेण गम्यतामिति । सर्प आह । भो गङ्गदत्त न सम्यगभिहितं त्वया । कथमहं तत्र गच्छामि । मदीयबिलदुर्गमन्येन विरुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ नो चेत्सर्वानपि भक्षयिष्यामीति । तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत् । अहो किमेतन्मया कृतं सर्पमानयता तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति । अथवा युक्तमुच्यते ।

अमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः ।
स करोति न संदेहः स्वयं हि विषभक्षणम् ॥ २४ ॥

तत्प्रयच्छाम्यस्यैकं दिनं प्रति सुहृदम् । उक्तं च ।

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः ।
तोषयन्त्यल्पदानेन वाडवं सागरो यथा ॥ २५ ॥

तथा च ।

यो दुर्बलो ह्यण्वपि याच्यमानो
बलीयसा यच्छति नैव साम्ना ।
प्रयच्छते नैव च दृश्यमानं
खारीं स चूर्णस्य पुनर्ददाति ॥ २६ ॥

तथा च ।

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः ॥ २७ ॥

एवं निश्चित्य नित्यमेकैकमादिशति । सोपि तं भक्षयित्वा तस्य परोक्षेन्यानपि भक्षयति । अथवा साध्विदमुच्यते ।

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
एवं चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥ २८ ॥

अथान्यदिने तेनापरान्मण्डूकान्भक्षयित्वा गङ्गदत्तसुतः पृथुदत्तो भक्षितः । तं भक्षितं मत्वा गङ्गदत्तस्तारस्वरेण धिग्धिक्प्रलापपरः कथंचिदपि न विरराम । ततः पत्न्याभिहितः ।

किं क्रन्दसि दुराक्रन्द स्वपक्षक्षयकारक ।
स्वपक्षस्य क्षये जाते त्वत्त्राणं कः करिष्यति ॥ २९ ॥

तदद्यापि विचिन्त्यतामात्मनो निष्क्रमणमस्य वधोपायश्च । अथ गच्छता कालेन सकलमपि कवलितं मण्डूककुलम् । केवलमेको गङ्गदत्तस्तिष्ठति । ततः प्रियदर्शनेन भणितम् । भो गङ्गदत्त बुभुक्षितोहम् । निःशेषिताः सर्वे मण्डूकाः । तद्दीयतां मे किंचिद्भोजनं यतोहं त्वयात्रानीतः । स आह । भो मित्र न त्वयात्र विषये मयावस्थितेन कापि चिन्ता कार्या । तद्यदि मां प्रेषयसि ततोन्यकूपकानामपि मण्डूकानाश्वास्यात्रानयामि । स आह । मम तावत्त्वमभक्ष्यो

भ्रातृस्थाने । तद्यद्येवं करोषि तत्सांप्रतं पितृस्थाने भवसि । तदेवं क्रियतामिति । सोपि तदाकर्ण्यारघट्टघटिकामाश्रित्य विविधदेवतोपकल्पितोपयाचितोस्मात्कूपाद्विनिष्क्रान्तः । प्रियदर्शनोपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति । अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोन्यकोटरनिवासिनीं गोधामुवाच । भद्रे क्रियतां स्तोकं साहाय्यम् । त्वया सह परिचितमास्ते । तद्गत्वा मण्डूकमन्विष्य क्वचिज्जलाशये गङ्गदत्ताय मम संदेशं कथय । येनागम्यतामेकाकिनापि द्रुततरं यद्यन्ये मण्डूका नागच्छन्ति । अहं त्वया विना नात्र वस्तुं शक्नोमि । तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम् । गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह । भद्र गङ्गदत्त स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणास्तिष्ठति । तच्छीघ्रं गम्यतामिति । अपरं च तेन तव विरूपकरणे सुकृतमन्तरे धृतम् । तन्निःशङ्केन मनसागम्यताम् । तदाकर्ण्य गङ्गदत्त आह ।

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम् ॥ ३० ॥

एवमुक्त्वा स तां विसर्जयामास ।

तद्भो दुष्टजलचर । अहमपि गङ्गदत्त इव कथंचिद्दृष्टापायोपि त्वद्गृहं न यास्यामि । तच्छ्रुत्वा मकर आह । भो मित्र नैतद्युज्यते ते कर्तुम् । सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन । अथवात्राहमनशनात्प्राणत्यागं तवोपरि करिष्यामि । वानर आह । मूढ किमहं लम्बकर्णो गर्दभो यो दृष्टापायमपि तत्रैव गत्वा मृतः ।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम् ।
अकर्णहृदयो मूर्खस्तेन मृत्युवशं गतः ॥ ३१ ॥

मकर आह । भद्र स को लम्बकर्णो गर्दभः । कथं दृष्टापायोपि मृतः । तन्मे निवेद्यताम् । वानर आह ।

# कथा २.

अस्ति कस्मिंश्चिद्वनोद्देशे करालकेसरो नाम सिंहः प्रतिवसति स्म । तस्य च धूसरको नाम शृगालः सदैवानुयायी परिचारकोस्ति । अथ कदाचित्तस्य हस्तिना सह युध्यमानस्य शरीरे प्रहाराः संजाता यैः पदमेकमपि चलितुं न शक्नोति । तस्याचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतः । अन्यस्मिन्नहनि तमवोचत् । स्वामिन् बुभुक्षया पीडितोहं पदात्पदमपि चलितुं न शक्नोमि । तत्कथं ते शुश्रूषां करोमि । सिंह आह । भो गच्छान्वेषय किंचित्सत्त्वं येनेमामवस्थां गतोपि व्यापादयामि । तदाकर्ण्य शृगालोन्वेषयन्कंचित्समीपवर्तिनं ग्राममासादितवान् । तत्र लम्बकर्णो नाम गर्दभस्तडागोपान्ते प्रविरलदूर्वाङ्कुरान्कृच्छ्रादास्वादयन्दृष्टः । ततश्च समीपीभूय तेनाभिहितः । माम नमस्कारोयं मदीयः संभाव्यताम् । चिराद्दृष्टोसि । तत्किमेवं दुर्बलः । स आह । भगिनीसुत किं कथयामि । रजकोतिनिर्दयोतिभारेण मां दमयति । घासमुष्टिमपि न प्रयच्छति । केवलं दूर्वाङ्कुरान्धूलिमिश्रितान्भक्षयामि । तत्कुतो मे शरीरे पुष्टिः । शृगाल आह । माम यद्येवं तदस्ति रमणीयतरप्रदेशो मरकतसदृशशष्पप्रायो नदीसनाथः । तदागच्छ मया सह येन सुखेन सुभाषितगोष्ठीसुखमनुभवावः । लम्बकर्ण आह । भो भगिनीसुत युक्तमुक्तं भवता । परं वयं ग्राम्याः पशवोरण्यचारिणां वध्यास्तत्किं तेन भव्यप्रदेशेन । शृगाल आह । माम मैवं वद । मद्भुजपरिरक्षितः स देशः । नास्ति कश्चित्तत्र परः । परमनेनैव दोषेण रजककदर्थितास्तत्र तिस्रो रासभ्योनाथाः सन्ति । ताश्च पुष्टिमापन्ना यौवनोत्कटा इदं मामूचुः । यदि त्वमस्माकं सत्यो मातुलस्तदा किंचिद्ग्रामान्तरं गत्वास्मद्योग्यं कंचित्पतिमानय । तदर्थं त्वामहं तत्र नयामि । अथ शृगालवचनानि श्रुत्वा कामपीडिताङ्गस्तमवोचत् । भद्र यद्येवं तदग्रे भव येनागच्छामि । अथवा

[illegible] ।

नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ।
यस्याः सङ्गेन जीव्येत म्रियेत च वियोगतः ॥ ३२ ॥

तथा च ।

यासां नाम्नापि कामः स्यात्संगमं दर्शनं विना ।
तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ॥ ३३ ॥

तथानुष्ठिते शृगालेन सह सिंहान्तिकमागतः । सिंहोपि व्यथाकुलस्तं दृष्ट्वा यावत्समुत्तिष्ठति तावद्रासभः पलायितुमारब्धः । अथ तस्य पलायमानस्य सिंहेन तलप्रहारो दत्तः । स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः । अत्रान्तरे शृगालः कोपाविष्टस्तमुवाच । भोः किमेवंविधः प्रहारस्ते यद्गर्दभोपि तव पुरतो बलाद्गच्छति । तत्कथं गजेन सह युद्धं करिष्यसि । तद्दृष्टं ते बलम् । अथ विलक्षस्मितं सिंह आह । भोः किमहं करोमि । मया न क्रमः सज्जीकृत आसीत् । अन्यथा गजोपि मत्क्रमाक्रान्तो न गच्छति । शृगाल आह । अद्याप्येकवारं तवान्तिके तमानेष्यामि । परं त्वया सज्जीकृतक्रमेण स्थातव्यम् । सिंह आह । यो मां प्रत्यक्षतया दृष्ट्वा गतः स पुनः कथमत्रागमिष्यति । तदन्यत्किमपि सत्त्वमन्विष्यताम् । शृगाल आह । किं तवानेन व्यापारेण । त्वं केवलं सज्जितक्रमास्तिष्ठ । तथानुष्ठिते शृगालोपि यावद्रासभमार्गेण गच्छति तावत्तत्रैव स्थाने चरन्दृष्टः । अथ शृगालं दृष्ट्वा रासभः प्राह । भो भगिनीसुत शोभनस्थाने त्वयाहं नीतः । द्राङ्मृत्युवशं गतः । तत्कथय किं तत्सत्त्वं यस्यातिरौद्रवज्रसदृशकरप्रहारादहं मुक्तः । तच्छ्रुत्वा प्रहसञ्शृगाल आह । भद्र रासभी त्वामायान्तं दृष्ट्वा सानुरागालिङ्गितुं समुत्थिता । त्वं च कातरत्वान्नष्टः । सा पुनर्न शक्ता त्वां विना स्थातुम् । तया तु नश्यतस्तेवलम्बनार्थं हस्तः क्षिप्तो नान्यकारणेन । तदागच्छ । सा त्वत्कृते प्रायोपवेशन उपविष्टा तिष्ठति । एतद्वदति । यल्लम्बकर्णो यदि मे भर्ता न भवति तदहमग्नौ जले वा प्रविशामि विषं वा भक्षयामि । पुनस्तस्य वियोगं सोढुं न शक्नोमि । तत्प्रसादं कृत्वा तत्रागम्यतामिति । नो चेत्तव

स्त्रीहत्या भविष्यति । अपरं च भगवान्कामः कोपं तव करिष्यति । उक्तं च ।

स्त्रीमुद्रां झषकेतनस्य महतीं सर्वार्थसंपत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ३४ ॥

अथासौ तद्वचनं श्रद्धेयतया श्रुत्वा भूयोपि तेन सह प्रस्थितः । अथवा साध्विदमुच्यते ।

जानन्नपि नरो दैवात्प्रकरोति विगर्हितम् ।
कर्म किं कस्यचिल्लोके गर्हितं रोचते कथम् ॥ ३५ ॥

अत्रान्तरे सज्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः । ततस्तं हत्वा शृगालं रक्षपालं निरूप्य स्वयं स्नानार्थं नद्यां गतः । शृगालेनापि लौल्यौत्सुक्यात्तस्य कर्णहृदयं भक्षितम् । अत्रान्तरे सिंहो यावत्स्नात्वा कृतदेवार्चनः प्रतर्पितपितृगणः समायाति तावत्कर्णहृदयरहितो रासभस्तिष्ठति । तं दृष्ट्वा कोपपरीतात्मा सिंहः शृगालमाह । आः पाप किमिदमनुचितं कर्म समाचरितं यदस्य कर्णसहितं हृदयं भक्षितम् । शृगाल आह । स्वामिन् मा मैवं वद यत्कर्णहृदयरहितोयं रासभ आसीत् । तेनेहागत्य त्वामवलोक्य भूयोप्यागतः । अथ तद्वचनं श्रद्धेयं श्रुत्वा सिंहस्तेनैव सह संविभज्य निःशङ्कितमनास्तं भक्षितवान् ।

अतोहं ब्रवीमि ।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम् ।
अकर्णहृदयो मूर्खस्तेन मृत्युवशं गतः ॥ ३६ ॥

तन्मूर्ख कपटं कृतं त्वया । परं युधिष्ठिरेणेव सत्यवचनेन विनाशितम् । अथवा साध्विदमुच्यते ।

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते स मन्दधीः ।
स स्वार्थाद्भ्रश्यते नूनं युधिष्ठिर इवापरः ॥ ३७ ॥

मकर आह । कथमेतत् । स आह ।

## कथा ३.

कस्मिंश्चिदधिष्ठाने कुम्भकारः प्रतिवसति स्म । स कदाचित्प्रमदोर्धभग्नकर्परतीक्ष्णाग्रस्योपरि महता वेगेन धावन्पतितः । ततः कर्परकोट्या पाटितललाटो रुधिरप्लावितनुः कृच्छ्रादुत्थाय स्वाश्रयं गतः । ततश्चापथ्यसेवनात्स प्रहारस्तस्य करालतां गतः कृच्छ्रेण नीरोगतां नीतः । अथ कदाचिद्दुर्भिक्षपीडिते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चिद्राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव । सोपि राजा तस्य ललाटे विकरालं प्रहारक्षतं दृष्ट्वा चिन्तयामास । यद्वीरः पुरुषः कश्चिदयम् । नूनं तेन ललाटपट्टे संमुखप्रहारः । अतस्तं संमानादिभिः सर्वेषां राजपुत्राणां सकाशाद्विशेषप्रसादेन पश्यति । तेपि राजपुत्रास्तस्य तं प्रसादातिरेकं पश्यन्तः परमेर्ष्याधर्मं वहन्तो राजभयान्न किंचिदूचुः । अथान्यस्मिन्नहनि तस्य भूपतेर्वीरसंभावनायां क्रियमाणायां विग्रहे समुपस्थिते प्रकल्प्यमानेषु गजेषु संनह्यमानेषु वाजिषु योधेषु प्रगुणीक्रियमाणेषु तेन भूभुजा स कुलालः प्रस्तावानुगतं पृष्टो निर्व्यञ्जने । यद्भो राजपुत्र कस्मिन्संग्रामे प्रहारोयं ललाटे लग्नः । स आह । देव नायं शस्त्रप्रहारः । कुलालोहं प्रकृत्या । मद्गेहेनेककर्पराण्यासन् । अथ कदाचिन्मद्यपानं कृत्वा निर्गतः प्रधावन्कर्परोपरि पतितः । तस्य प्रहारविकारोयं मे ललाट एवं विकरालतां गतः । तदाकर्ण्य राजा सव्रीडमाह । अहो वञ्चितोहं राजपुत्रानुकारिणानेन कुलालेन । तद्दीयतां द्रागेतस्य चन्द्रार्धः । तथानुष्ठिते कुम्भकार आह । मा मैवं कुरु । पश्य मे रणे हस्तलाघवम् । राजा प्राह । भोः सर्वगुणसंपन्नो भवान् । तथापि गम्यताम् । उक्तं च ।

शूरश्च कृतविद्यश्च दर्शनीयोसि पुत्रक ।
यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ३८ ॥

---

## कथा ४.

कुलाल आह । कथमेतत् । राजा ग्राह । कस्मिंश्चिद्वनोद्देशे सिंहदंपती प्रतिवसतः स्म । अथ सिंही पुत्रद्वयमजीजनत् । सिंहोपि नित्यमेव मृगान्व्यापाद्य सिंह्या ददाति । अथ कदाचित्तेन किमपि नासादितम् । वने भ्रमतोपि तस्य रविरस्तंगतः । अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः । स च बालकोयमिति मत्वा यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्या जीवन्तमपि समर्पितवान् । ततः सिंह्याभिहितम् । भोः कान्त आनीतं किंचिदस्माकं भोजनम्, सिंह आह । प्रिये मयाद्येनं शृगालशिशुं परित्यज्य न किंचित्सत्त्वमासादितम् । स च मया बालोयमिति मत्वा न व्यापादितः । उक्तं च ।

स्त्रीलिङ्गिविप्रबालानां प्रहर्तव्यं न कर्हिचित् ।
प्राणत्यागेपि संजाते विश्वस्तानां विशेषतः ॥ ३९ ॥

इदानीमेनं भक्षयित्वा पथ्यं कुरु । प्रभातेन्यदुपार्जयिष्यामि । साह । भोः कान्त त्वया बालकोयमिति मत्वा न व्यापादितः । तदहं कथं स्वोदरार्थे व्यापादयामि । उक्तं च ।

अकृत्यं नैव कृत्यं स्यात्प्राणत्यागेपि संस्थिते ।
न च कृत्यं विमुञ्चेत एष धर्मः सनातनः ॥ ४० ॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति । इत्युक्त्वा तमपि स्वस्तनक्षीरेण पुष्टिमनयत् । एवं ते त्रयोपि शिशवः परस्परमज्ञातजातिविशेषा एकत्र विहारिणो बाल्यमतिवाहयन्ति । अथ कदाचित्तत्र वने भ्राम्यन्वनगजो दृष्टः । तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्तावत्तेन शृगालसुतेनाभिहितम् । अहो गजोयं युष्मत्कुलशत्रुः । तन्न गन्तव्यमेतस्याभिमुखम् । एवमुक्त्वा गृहं प्रधावितः । तावपि ज्येष्ठत्रासान्निरुत्साहतां गतौ । अथवा साध्विदमुच्यते ।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥ ४१ ॥

अत एव हि वाञ्छन्ति भूपा योधान्महाबलान् ।
शूरान्धीरान्कृतोत्साहान्वर्जयन्ति च कातरान् ॥ ४२ ॥

ततो द्वावपि पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुर्यथा गजं दृष्ट्वा दूरतोपि नष्टः । सोपि तदाकर्ण्य कोपाविष्टः प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखीं भ्रुकुटीं कृत्वा तौ निर्भर्त्सयन्परुषतरवचनान्युवाच । ततः सिंह्यैकान्ते नीत्वा प्रबोधितः । वत्स मैवं कदाचिज्जल्प भवदीयलघुभ्रातरावेतौ । अथासौ प्रभूतकोपाविष्टस्तामित्युवाच । किमहमेताभ्यां शौर्यरूपेण विद्याभ्यासेन वा न्यूनो येन मामुपहसतः । तन्मयावश्यमेतौ व्यापादनीयौ । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती प्राह ।

शूरोसि कृतविद्योसि दर्शनीयोसि पुत्रक ।
यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ४३ ॥

परं शृगालसुतस्त्वं कृपया मया स्वकीयक्षीरपानेन पुष्टिं नीतः । तद्यावन्नैतौ त्वां शृगालं जानीतस्तावद्द्रुतं गत्वा स्वजातिमध्ये भव । नो चेदाभ्यां हतो मृत्युपथं समेष्यसि । सोपि तद्वचनं श्रुत्वा भयव्याकुलमनाः क्षणात्प्रनष्टः ।

तस्मात्त्वमपि यावदेते राजपुत्रास्त्वां कुलालं न जानन्ति तावद्द्रुततरं गच्छ । नो चेदेतेषां सकाशाद्विडम्बनां प्राप्स्यसि । कुलालोपि तदाकर्ण्य द्रुततरं प्रनष्टः ।

अतोहं ब्रवीमि । युधिष्ठिर इव सत्यवचनात्त्वं तामापदमापन्नः । तद्भो दुष्ट मकर त्वमपि कुलालवत्स्ववचनेन प्रकटीकृतः । उक्तं च ।

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ ४४ ॥

उक्तं च ।

सुगुप्तं रक्ष्यमाणोपि दर्शयन्दारुणं वपुः ।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः ॥ ४५ ॥

मकर आह । कथमेतत् । स आह ।

## कथा ५.

अस्ति कस्मिंश्चिदधिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म । तस्यैको रासभोस्ति । सोपि घासाभावादतिदुर्बलः। अथ तेन रजकेन क्वापि व्याघ्रचर्म प्राप्तम् । ततश्चाचिन्तयत् । अहो शोभनमापतितम् । एतच्चर्म परिधाप्य रासभं रात्रौ यावत्क्षेत्रेषूत्सृजामि येन व्याघ्रं मत्वा समीपवर्तिनः क्षेत्राच्च निष्कासयन्ति । तथानुष्ठिते रासभो रात्रौ यथेच्छया यवभक्षणं करोति । रात्रिशेषेपि भूयो रजकः स्वाश्रयं नयति। एवं गच्छता कालेन स रासभः पीवरतनुर्जातः । कृच्छ्राद्बन्धनमपि नीयते । अथान्यस्मिन्नहनि स मदोद्धतो दूराद्रासभीशब्दं शृण्वंस्तारस्वरेण शब्दायितुमारब्धः। अत्र ते क्षेत्रपा रासभोयं व्याघ्रचर्मप्रतिच्छन्न इति मत्वा लकुटपाषाणशरप्रहारैस्तं व्यापादितवन्तः ।

अतोहं ब्रवीमि ।

सुगुप्तं रक्ष्यमाणोपि दर्शयन्दारुणं वपुः ।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः ॥ ४६ ॥

तत्किं श्यामलकवदत्यपमानसहनादर्धचन्द्रदानेन यास्यसि । मकर आह । कथमेतत् । स प्राह ।

## कथा ६.

अस्त्यत्र धरापीठे विकण्टकं नाम पुरम् । तत्र महाधन ईश्वरो नाम भाण्डपतिः । तस्य चत्वारो जामातृका अवन्तीपीठात्प्राघूर्णका विकण्टकपुरे समायाताः । ते च तेन महता गौरवेणाभ्यर्चिता भोजनाच्छादनादिभिः । एवं तेषां तत्र वसतां मासषट्कं संजातम् ।

तत ईश्वरेण स्वभार्योक्ता । यदेते जामातरः परमगौरवेणावर्जिताः स्वानि गृहाणि न गच्छन्ति । तत्किं कथ्यते । विनापमानं न यास्यन्ति । तदद्य भोजनवेलायां पादप्रक्षालनार्थं जलं न देयं येनापमानं ज्ञात्वा परित्यज्य गच्छन्तीति । तथानुष्ठिते गर्गः पादप्रक्षालनापमानात्सोमो लघ्वासनदानाद्दत्तः कदशनतो यातः । एवं ते त्रयोपि परित्यज्य गताः । चतुर्थः श्यामलको यावन्न याति तावदर्धचन्द्रप्रदानेन निष्कासितः । अतोहं ब्रवीमि ।

गर्गो हि पादशौचाल्लघ्वासनदानतो गतः सोमः ।
दत्तः कदशनभोज्याच्छ्यामलकश्चार्धचन्द्रेण ॥ ४७ ॥ इति ।

तत्किमहं रथकारवन्मूर्खो यतः स्वयमपि दृष्ट्वा ते विकारं पश्चाद्विश्वसिमि । उक्तं च ।

प्रत्यक्षेपि कृते पापे मूर्खः साम्ना प्रशाम्यति ।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥ ४८ ॥

मकर आह । कथमेतत् । स आह ।

## कथा ७.

कस्मिंश्चिदधिष्ठाने कश्चिद्रथकारः प्रतिवसति स्म । तस्य भार्या पुंश्चली जनापवादसंयुक्ता । सोपि तस्याः परीक्षार्थं व्यचिन्तयत् । कथं मयास्याः परीक्षणं कार्यम् । न चैतद्युज्यते कर्तुम् । यतः ।

नदीनां च कुलानां च मुनीनां च महात्मनाम् ।
परीक्षा न प्रकर्तव्या स्त्रीणां दुश्चरितस्य च ॥ ४९ ॥
वसोर्वीर्योत्पन्नामभजत मुनिर्मत्स्यतनयां
तथा जातो व्यासः शतगुणनिवासः किमपरम् ।
स्वयं वेदान्व्यस्यञ्छमितकुरुवंशप्रसविता
स एवाभूच्छ्रीमानहह विषमाः कर्मगतयः ॥ ५० ॥

कुलानामिति पाण्डवानामपि महात्मनां नोत्पत्तिरधिगन्तव्या यतः

क्षेत्रजा इति । स्त्रीदुश्चरितं संधुक्ष्यमाणमनेकदोषान्प्रकटयति स्त्रीणामिति । तथा च ।

यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाच्छनः ।
स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद्दुर्जनो हितः ॥ ९१ ॥

तथापि शुद्धामशुद्धां वापि जानामि लोकवचनात् । उक्तं च ।

यन्न वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम् ।
तत्सर्वं वेत्ति लोकोयं यत्स्याद्ब्रह्माण्डमध्यगम् ॥ ९२ ॥

एवं संप्रधार्य तामवोचत् । प्रिये अहं प्रातर्ग्रामान्तरं यास्यामि । तत्र दिनानि कतिचिल्लगिष्यन्ति । तत्त्वया किंचित्पाथेयं मम योग्यं कार्यम् । सापि तदाकर्ण्य हर्षितचित्तौत्सुक्येन सर्वकार्याणि संत्यज्य सिद्धमन्नं घृतशर्कराप्रायमकरोत् । अथवा साध्विदमुच्यते ।

दुर्दिवसे घनतिमिरे दुःसंचारासु नगरवीथीषु ।
पत्यौ विदेशयाते परमसुखं जघनचपलायाः ॥ ९३ ॥

अथासौ प्रत्यूष उत्थाय स्वगृहान्निर्गतः । सापि तं प्रस्थितं विज्ञाय प्रहसितवदनाङ्गसंस्कारं कुर्वाणा कथंचित्तं दिवसमत्यवाहयत् । ततश्च परिचितं कंचिद्विटगृहं गत्वाभ्यर्थ्योक्तवती । यद्ग्रामान्तरं गतः स दुरात्मा मे पतिः । तदद्य त्वयास्मद्गृहे प्रसुप्तजने समागन्तव्यम् । तथानुष्ठिते स रथकारोप्यरण्ये दिनमतिवाह्य प्रदोषे स्वगृहमपरद्वारेण प्रविष्टः शय्यातले निभृतो भूत्वा स्थितः । अत्रान्तरे स देवदत्तः शयन आगत्योपविष्टः । तं दृष्ट्वा रथकारो रोषाविष्टचित्तो व्यचिन्तयत् । किमेनमुत्थाय विनाशयाम्यथवा द्वावप्येतौ सुप्तौ हेलया हन्मि । परं पश्यामि तावच्चेष्टितमस्याः शृणोमि चानेन सहालापान् । अथान्तरे सा गृहद्वारं निभृतं विधाय शयनतलमारूढा । तस्यास्तच्छयनमारोहन्त्या रथकारशरीरे पादो लग्नः । ततो व्यचिन्तयत् । नूनमेतेन दुरात्मना रथकारेण मत्परीक्षणार्थं भाव्यम् । तत्स्त्रीचरित्रविज्ञानं करोमि । एवं तस्याश्चिन्तयन्त्याः स देवदत्त-

स्पर्शोत्सुको बभूव । ततश्च तया कृताञ्जलिपुटयाभिहितम् । यन्महानुभाव त्वया न मे गात्रं स्प्रष्टव्यं यतोहं पतिव्रता महासती च । नो चेच्छापं दत्त्वा त्वां भस्मसात्करिष्यामि । स आह । यद्येवं तत्किमर्थमहं त्वयात्रानीतः । सा प्राह । भोः शृण्वेकाग्रमनाः । अहमद्य प्रत्यूषे देवतादर्शनार्थं चण्डिकायतनं गता । तत्राकस्मिकी खे वाणी संजाता । पुत्रि किं करोमि । भक्तासि मे त्वम् । परं षण्मासाभ्यन्तरे विधिनियोगाद्विधवा भविष्यसि । ततो मयाभिहितम् । यद्भगवति यथा त्वमेतज्जानासि तथा प्रतीकारमपि वेत्सि । तदस्ति कश्चिदुपायो येन मे पतिः शतसंवत्सरजीवी भवति । ततस्तयाभिहितम् । वत्से सन्नपि नास्ति यतस्तवायत्तः स प्रतीकारः । तच्छ्रुत्वा मयोक्तम् । देवि यन्मत्प्राणैर्भवति तदादेशय । करोमि । ततो देव्याभिहितम् । यदि परपुरुषेण सहैकस्मिञ्छयने समारुह्यालिङ्गनं करोषि तत्तव भर्तृसक्तोपमृत्युस्तस्य संचरति त्वद्भर्ता पुनरन्यद्वर्षशतद्वयं जीवति । तेन मया त्वमभ्यर्थितः । ततो यत्किंचित्कर्तुमनास्तत्कुरुष्व । न हि देवतावचनमन्यथा भविष्यतीति मे निश्चयः । सोपि रथकारो मूर्खस्तस्यास्तद्वचनमाकर्ण्य पुलकाङ्कितननुः शय्यातलान्निष्क्रम्य तामुवाच । साधु पतिव्रते साधु कुलनन्दिनि साधु । अहं दुर्जनवचनशङ्कितहृदयस्त्वत्परीक्षार्थं ग्रामान्तरव्याजं कृत्वात्र निभृतं खट्वातले लीनः स्थितः । तदेह्यालिङ्गय माम् । एवमुक्त्वा तामालिङ्ग्य स्वस्कन्धे कृत्वा तं देवदत्तमप्युवाच । भो महानुभाव मत्पुण्यैस्त्वमिहागतः । त्वत्प्रसादात्प्राप्तमद्य मया वर्षशतद्वयप्रमाणमायुः । ततस्त्वमपि मां समालिङ्ग्य स्कन्धं मे समारोह । इति जल्पन्ननिच्छन्तमपि देवदत्तं बलादालिङ्ग्य स्कन्धे समारोपितवान् । ततश्च तूर्यध्वनिच्छन्देन नृत्यन्सकलगृहद्वारेषु बभ्राम । अतोहं ब्रवीमि ।

प्रत्यक्षेपि कृते पापे मूर्खः साम्ना प्रशाम्यति ।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥ ५४ ॥

तन्मूढ दृष्टविकारस्त्वम् । तत्कथं तव गृहं गच्छामि । अथवा

यन्मां त्वं विश्वासयसि तत्ते दोषो नास्ति यत ईदृशी स्वभावदुष्टा युष्मज्जातिर्या शिष्टसङ्गादपि सौम्यत्वं न याति । अथवा स्वभावोयं दुष्टानाम् । उक्तं च ।

सद्भिः संबोध्यमानोपि दुरात्मा पापपौरुषः ।
घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ ९९ ॥

अथवा साध्विदमुच्यते ।

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वयोनिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥ ९६ ॥

मकर आह । कथमेतत् । सोब्रवीत् ।

## कथा ८.

अस्ति कस्मिंश्चिदधिष्ठाने तपोवने शालङ्कायनो नाम तपोधनो जाह्नव्यां स्नानार्थं गतः । तस्य च सूर्योपस्थानं कुर्वतस्तत्र प्रदेशे मूषिका काचित्खरतरनखाग्रपुटेन श्येनेन गृहीता । तां दृष्ट्वा स मुनिः करुणार्द्रहृदयो मुञ्च मुञ्चेति कुर्वाणस्तस्य पाषाणखण्डं प्राक्षिपत् । सोपि पाषाणखण्डप्रहारव्याकुलेन्द्रियो भ्रष्टमूषिको भूमौ निपपात । मूषिकापि भयत्रस्ता कर्तव्यमजानती रक्ष रक्षेति जल्पन्ती मुनिचरणान्तिकमुपाविशत् । श्येनेनापि चेतनां लब्ध्वा मुनिरुक्तः । यद्भो मुने न युक्तमनुष्ठितं भवता यदहं पाषाणेन ताडितः । किं त्वमधर्मान्न बिभेषि । तत्समर्पय ममैनां मूषिकाम् । नो चेत्प्रभूतं पातकमवाप्स्यसि । इति ब्रुवाणं श्येनं प्रोवाच सः । भो विहंगाधम रक्षणीयाः प्राणिनां प्राणाः । दण्डनीया दुष्टाः । संमाननीयाः साधवः । पूजनीया गुरवः । स्तुत्या देवाः । तत्किमसंबद्धं प्रजल्पसि । श्येन आह । मुने न त्वं सूक्ष्मधर्मं वेत्सि । इह हि सर्वेषां प्राणिनां विधिना सृष्टिं कुर्वताहारोपि विनिर्मितः । ततो यथा भवतामन्नं तथास्माकं मूषिकादयो विहिताः । तत्स्वाहारकाङ्क्षिणं मां किं दूषयसि । उक्तं च ।

यद्यस्य विहितं भोज्यं न तत्तस्य प्रदुष्यति ।
अभक्ष्ये बहुदोषः स्यात्तस्मात्कार्यो न व्यत्ययः ॥ ५७ ॥
मद्यं यथा द्विजातीनां मद्यपानां यथा हविः ।
भक्ष्यमभक्ष्यतामेति तथान्येषामपि द्विज ॥ ५८ ॥
भक्ष्यं भक्षयतां श्रेयो अभक्ष्यं तु महदघम् ।
तत्कथं मां वृथाचारं त्वं दण्डयितुमर्हसि ॥ ५९ ॥

अपरं मुनीनां न चैष धर्मो यतस्तैर्दृष्टमदृष्टं श्रुतमश्रुतमलौल्यत्वमशत्रुत्वं प्रशस्यते । उक्तं च ।

समः शत्रौ च मित्रे च समलोष्टाश्मकाञ्चनः ।
सुहृन्मित्रे ह्युदासीनो मध्यस्थो द्वेष्यबन्धुषु ॥ ६० ॥
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ।
साधूनां निरवद्यानां सदाचारविचारिणाम् ॥ ६१ ॥
योगी युञ्जीत सततमात्मानं रहसि स्थितः ।

तत्त्वमनेन कर्मणा भ्रष्टतपाः संजातः ।

उक्तं च ।

मुञ्च मुञ्च पतत्येको मा मुञ्चेति द्वितीयकः ।
उभयोः पतनं दृष्ट्वा मौनं सर्वार्थसाधनम् ॥ ६२ ॥

शालङ्कायन आह । कथमेतत् । श्येन आह ।

## कथा ९.

कस्मिंश्चिन्नदीतट एकतद्वितत्रिताभिधानास्त्रयोपि भ्रातरो मुनयस्तपः कुर्वन्ति । तेषां च तपःप्रभावादाकाशस्था धौतपोतिका निरालम्बा जलार्द्रा भूस्पर्शनभयेन स्नानसमये तिष्ठन्ति । अथान्येद्युर्मयेव काचिन्मण्डूकिका केनापि गृध्रेण बलेन नीता । अथ तां गृहीतां विलोक्य तेषां ज्येष्ठेन करुणार्द्रहृदयेन भवतेव व्याहृतम् । मुञ्च मुञ्चेति । अत्रान्तरे तस्य धौतपोतिकाकाशाद्भूमौ पतिता । तां

पतितां दृष्ट्वा द्वितीयेन तद्वयार्त्तेन मा मुञ्च मा मुञ्चेत्यभिहितं यावत्तावत्तस्यापि पपात । ततस्तृतीयो द्वयोरपि धौतपोतिकां भूमौ पतितां दृष्ट्वा तूष्णीं बभूव । अतोहं ब्रवीमि ।

मुञ्च मुञ्च पतत्येको मा मुञ्चेति द्वितीयकः ।
उभयोः पतनं दृष्ट्वा मौनं सर्वार्थसाधनम् ॥ ६३ ॥

तच्छ्रुत्वा मुनिर्विहस्याह । भो मूर्ख विहंगम कृतयुगे धर्मः स आसीत् । यतः कृतयुगे पापालापतोपि पापं जायते तेन धौतपोतिके पतिते अशिष्टालापेन न सदपवचनदोषतः । एष पुनः कलियुगः । अत्र सर्वोपि पापात्मा । तत्कर्म कृतं विना पापं न लगति । उक्तं च ।

संचरन्तीह पापानि युगेष्वन्येषु देहिनाम् ।
कलौ तु पापसंयुक्ते यः करोति स लिप्यते ॥ ६४ ॥

उक्तं च ।

आसनाच्छयनाद्यानात्संगतेश्चापि भोजनात् ।
कृते संचरते पापं तैलबिन्दुरिवाम्भसि ॥ ६५ ॥

तत्किं वृथाप्रलपितेन । गच्छ त्वम् । नो चेच्छापयिष्यामि । अथ गते श्येने मूषिकया स मुनिरभिहितः । भगवन् नय मां स्वाश्रयम् । नो चेदन्यो दुष्टपक्षी कश्चिन्मां व्यापादयिष्यति । तदहं तत्रैवाश्रये त्वद्दत्तान्नाहारमुष्ट्या कालं नेष्यामि । सोपि दाक्षिण्यवान्सकरुणो ऽचिन्तयत् । कथं मया मूषिका हस्ते धृता नेया जनहास्यकारिणी । तदेनां कुमारिकां कृत्वा नयामि । एवं सा कन्यका कृता । तथानुष्ठिते कन्यासहितं मुनिमवलोक्य पत्नी पप्रच्छ । भगवन् कुत इयं कन्या । स आह । एषा मूषिका श्येनभयाच्छरणार्थिनी कन्यारूपेण तव गृहमानीता । तत्त्वया यत्नेन रक्षणीया । भूयोप्येनां मूषिकां करिष्यामि । सा प्राह । भगवन् मैवं कार्षीः । अस्यास्त्वं धर्मपिता । उक्तं च ।

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ६६ ॥

तत्त्वयास्याः प्राणाः प्रदत्ताः । अपरं ममाप्यपत्यं नास्ति । तस्मादेषा मम सुता भविष्यति । तथानुष्ठिते सा कन्यका शुक्लपक्षचन्द्रकलिकेव नित्यमेव वृद्धिं प्राप्नोति । सापि तस्य मुनेः शुश्रूषां कुर्वती सपत्नीकस्य यौवनमाश्रयात् । अथ तां यौवनोन्मुखीमवलोक्य शालङ्कायनः स्वपत्नीमुवाच । प्रिये यौवनोन्मुखी वर्तत इयं कन्या । अनर्हा सांप्रतं मद्गृहवासस्य । उक्तं च ।

अनूढा मन्दिरे यस्य रजः प्राप्नोति कन्यका ।
पतन्ति पितरस्तस्य स्वर्गस्था अपि नैर्गुणैः ॥ ६७ ॥

तत्कस्मैचिच्छ्रेष्ठवराय प्रदीयते । उक्तं च ।

वरं वरयते कन्या माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ६८ ॥

तथा च ।

यावन्न लज्जते कन्या यावत्क्रीडति पांसुना ।
यावत्तिष्ठति गोमार्गे तावत्कन्यां विवाहयेत् ॥ ६९ ॥
माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ७० ॥

तथा च ।

कुलं च शीलं च सनाथतां च विद्यां च वित्तं च वपुर्वयश्च ।
एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ॥ ७१ ॥

अन्यच्च ।

दूरस्थानामविद्यानां मोक्षधर्मानुवर्तिनाम् ।
शूराणां निर्धनानां च न देया कन्यका बुधैः ॥ ७२ ॥

तद्यद्यस्या रोचते तद्भगवन्तमादित्यमाकार्य तस्मै प्रयच्छामि ।
उक्तं च ।

अनिष्टः कन्यकाया यो वरो रूपान्वितोपि यः ।
यदि स्यात्तस्य न देया कन्या श्रेयोभिवाञ्छता ॥ ७३ ॥

साह । को दोषोत्र विषये । एवं क्रियताम् । अथ मुनिना समाहूतः सविता तत्क्षणमेवाभ्युपेत्य प्रोवाच । भगवन् वद द्रुतं किमर्थमहमाहूतः । स आह । एषा मत्कन्या यदि त्वां वृणोति तद्विवाहय । एवमुक्त्वा स भगवांस्तस्या दर्शितः । प्रोवाच च । पुत्रि किं तव रोचत एष भगवांस्त्रैलोक्यदीपः । सा प्राह । तात अतिदहनात्मकोयम् । नाहमेनमभिलषामि । अस्मादपि यः कश्चिदुत्कृष्टतरः स आहूयताम् । अथ तस्यास्तद्वचनमाकर्ण्य भास्वरोपि तां मूषिकां विदित्वा निःस्पृहस्तमुवाच । भगवन् अस्ति ममाप्युत्तमो मेघो येनाच्छादितस्य मे नामापि न ज्ञायते । अथ मुनिना मेघोप्याहूतः । एष रोचते । सा मुनिमाह । यन्मां मेघादपि श्रेष्ठाय प्रयच्छ । अथ मेघोपि मुनिना पृष्टः । भोस्तवाभ्यधिकः कोप्यस्ति । स आह । यदस्ति ममाप्यधिको वायुः । वायुना हतोहं सहस्रधा यामि । तच्छ्रुत्वा मुनिना वायुराहूतः । आह च । एष उत्तमो वायुस्तव प्रतिभाति । सा प्राह । तात प्रबलोप्ययं चञ्चलः । तदभ्यधिकः श्रेष्ठतर आनीयताम् । मुनिराह । भो वायो तवाभ्यधिकोस्ति कश्चित् । स आह । ममाप्यधिकाः पर्वताः सन्ति यैः संस्तभ्य बलवन्तोपि वयं ध्रियामहे । अथ मुनिः पर्वतमाहूय कन्याया अदर्शयत् । पुत्रिके त्वामस्मै प्रयच्छामि । साह । तात कठिनात्मकोयम् । तदन्यस्य प्रदीयताम् । अथ स मुनिना पृष्टः । यद्भोः पर्वतराज तवाप्यधिकः कश्चिदस्ति । स आह । सन्ति ममाप्यधिका मूषका येस्मद्देहं बलात्सर्वतो भेदयन्ति । तदाकर्ण्य मुनिर्मूषकमाहूय तस्या अदर्शयत् । पुत्रिके एष ते प्रतिभाति मूषकराजो येन यथोचितमनुष्ठीयते । सापि तं दृष्ट्वा स्वजातीयमिति मन्यमाना प्रोद्धूषितशरीरान्तां प्रोवाच । तात मां मूषिकां कृत्वास्मै मूषकाय प्रयच्छ येन स्वजातिविहितं गृहस्थधर्ममनुभवामि । तच्छ्रुत्वा तेन स्त्रीधर्मविचक्षणेन तां मूषिकां कृत्वा मूषकाय प्रदत्ता । अथवा साध्विदमुच्यते ।

न सुवर्णं न रत्नानि न च राज्यपरिक्रियाम् ।
तथा वाञ्छन्ति कामिन्यो यथाभीष्टतमं वरम् ॥ ७४ ॥

तद्यथा सा मूषिका देवपदं त्यक्त्वा स्वजातिदोषेण नीचसंगमं गता तथा त्वमपि मया संगतोपि स्नेहगृहीतोपि स्वजातिधर्मदुष्टः संजातः । अतोहं ब्रवीमि ।

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥ ७५ ॥

तन्मूर्ख स्त्रीलुब्ध स्त्रीजित अन्येपि ये त्वद्विधा भवन्ति ते स्वकार्यं विभवं मित्रं च परित्यजन्ति तत्कृते । उक्तं च ।

या ममोद्विजते नित्यं साद्य मामवगूहते ।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत् ॥ ७६ ॥

मकर आह । कथमेतत् । सोब्रवीत् ।

## कथा १०.

अस्ति कस्मिंश्चिदधिष्ठाने कामार्तो नाम महाधनी वणिक्पुत्रो वृद्धः । तेन मृतभार्येण कामोपहतचेतसा काचिन्निर्धनस्य दुहिता प्रभूतवित्तं दत्त्वोद्वाहिता । अथ सा दुःखाभिभूता तं वृद्धतमं वणिजं वीक्षितुमपि न शक्नोति । अथवा साध्विदमुच्यते ।

श्वेतं पदं शिरसि वीक्ष्य शिरोरुहाणां
स्थानं परं परिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ ७७ ॥

तथा च ।

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता-
श्चक्षुर्भ्राम्यति रूपमेव ह्रसते वक्त्रं च लालायते ।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
हा कष्टं जरयाभिभूतपुरुषः पुत्रैरवज्ञायते ॥ ७८ ॥

अथ कदाचित्सा तेन सहैकशयने पराङ्मुखी स्थिता यावत्तिष्ठति

तावत्तस्य गृहे चौरः प्रविष्टः । सापि तं चौरमवलोक्य भयव्याकुलमनास्तं वृद्धमप्यालिङ्गितवती । सोपि विस्मयात्पुलकाङ्कितसर्वगात्रश्चिन्तयामास । किमेषा मामद्यावगूहते । अहो चित्रमेतत् । ततश्च यावन्निपुणतयावलोकयति तावच्चौरः प्रविष्टः कोणैकदेशे तिष्ठति । पुनरचिन्तयत् । नूनमेषा चौरस्य शङ्कया मां समालिङ्गति । तज्ज्ञात्वा चौरमाह ।

या ममोद्विजते नित्यं साद्य मामवगूहते ।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत् ॥ ७९ ॥

भूयोपि निर्गच्छन्तमवादीत् । भो चोर नित्यमेव त्वया रात्रावागन्तव्यम् । मदीयोयं विभवस्त्वदीय इति । अतोहं ब्रवीमि ।

या ममोद्विजते नित्यं साद्य मामवगूहते ।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत् ॥८० ॥

किं बहुना । तेन च स्त्रीलुब्धेन स्वं सर्वमपि चौरस्य समर्पितम् । त्वयापि तथानुष्ठितम् । अथैवं तेन सह तस्य विवदतो जलचरेण केनाप्यागत्याभिहितम् । भो मकर त्वदीयभार्यानशनोपविष्टा त्वयि चिरयति प्रणयाभिभवाद्विपन्ना । सोपि तच्छ्रुत्वातीव व्याकुलमना व्यचिन्तयत् । अहो किमिदं संजातं मम मन्दभाग्यस्य । उक्तं च ।

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनं कान्तारादतिरिच्यते ॥ ८१ ॥
वृक्षमूलेपि दयिता यत्र तिष्ठति तद्गृहम् ।
प्रासादोपि तया हीनो अरण्यसदृशः स्मृतः ॥ ८२ ॥

तथा च ।

माता यस्य गृहे नास्ति भार्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ८३ ॥

तन्मित्र क्षम्यतां मया तेपराधः कृतः । संप्रत्यहं तद्वियोगाद्वह्निप्रवेशं करिष्यामि । तदाकर्ण्य वानरः प्रहस्य प्रोवाच । भो ज्ञातस्त्वं मया प्रथममेव यत्त्वं स्त्रीजितः स्त्रीवश्यश्च । सांप्रतं पुनः प्रत्ययः

संजातः । तन्मूढ आनन्दे कार्ये त्वं कस्माद्विषादं गतः । नादृग्दुष्टभार्यायां मृतायामुत्सवः कर्तुं युज्यते । उक्तं च ।

या भार्या दुष्टचरिता सततं कलहप्रिया ।
भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ ८४ ॥
तस्मात्सर्वप्रयत्नेन नामापि परिवर्जयेत् ।
स्त्रीणामिह हि सर्वासां य इच्छेत्सुखमात्मनः ॥ ८५ ॥
के नाम न विनश्यन्ति मिथ्याज्ञानान्नितम्बिनीम् ।
रम्यां बुद्धोपसर्पन्ति ये ज्वालां शलभा इव ॥ ८६ ॥
अन्तर्विषमया ह्येता बहिर्वृत्त्या मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥ ८७ ॥
यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः ।
यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥ ८८ ॥
ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः ।
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ ८९ ॥
आस्तां तावत्किमन्येन दौरात्म्येनात्र योषिताम् ।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रमपि स्वकम् ॥ ९० ॥
रूक्षायां स्नेहसंभारं कठोरायां सुमार्दवम् ।
नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ९१ ॥

मकर आह । भो अस्त्वेतत् । परं किं करोमि । अनर्थद्वयमेतत्संजातम् । एकस्तावद्गृहभङ्गोपरस्तु त्वद्विधेन मित्रेण सह चित्तविश्लेषः । अथवा भवत्येवं दैवोपहतानाम् । उक्तं च ।

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
न जारो न च भर्ता च किं निरीक्षसि नग्निके ॥ ९२ ॥

वानर आह । कथमेतत् । सोऽब्रवीत् ।

## कथा ११.

कस्मिंश्चिदधिष्ठाने हालिकदंपती प्रतिवसतः स्म । सा च हालि-

कपत्नी पतिवृद्धभावात्सदैवान्यचित्ता न किंचिदपि गृहे स्थैर्यमालम्बते । केवलं परपुरुषान्वेषणा भ्रमति । अन्यदा केनचित्परवित्तापहारकेण धूर्तेन सा लक्षिता विजने प्रोक्ता च । सुभगे मृतभार्योहं तव रूपलावण्यदर्शनेन हृदये स्मरबाणेन पीडितः । तद्दीयतां मे रतिदक्षिणा । ततस्तयाभिहितम् । भोः सुभग यद्येवं तदस्ति मे पत्युः प्रभूतं धनम् । स वृद्धभावात्प्रचलितुमसमर्थः । अतस्तद्धनमादायाहमागच्छामि । पश्चात्त्वया सहान्यत्र गत्वा यथेच्छं रतिसौख्यमनुभवामि । स आह । रोचते ममाप्येतत् । प्रत्यूषेत्र स्थाने समागन्तव्यं येन शुभतरं किंचिन्नगरं गत्वा त्वया सह जीवलोकसुखमनुभवामि । सापि तथेति प्रतिज्ञाय प्रहसितवदना स्वं गृहं गत्वा प्रसुप्तस्य पत्युः सर्वं धनं रात्रावादाय प्रत्यूषे तत्कथितस्थानमुपाद्रवत् । धूर्तोपि तामग्रे कृत्वा दक्षिणां दिशमाश्रित्य सत्वरगतिः प्रस्थितः । अथ तयोर्व्रजतोर्योजनद्वयमात्रेणाग्रतो नदीं समुपस्थितां दृष्ट्वा धूर्तश्चिन्तयामास । किमहमनया यौवनप्रान्ते वर्तमानया करिष्यामि । कदाचित्पृष्ठतः कश्चित्समागमिष्यति । तत्केवलं वित्तमादाय गच्छामि । इति निश्चित्य तामुवाच । प्रिये सुदुस्तरेयं नदी । तत्तावदहं द्रव्यमात्रं पारे धृत्वा समागच्छामि येन त्वामेकाकिनीं सुखेन पृष्ठमारोप्य नयामि । सा प्राह । भद्र एवं क्रियताम् । एवमुक्त्वा तस्मा अशेषं वित्तमर्पयामास । अथ तेनाभिहितम् । प्रिये परिधानवस्त्रमपि समर्पय येन जलमध्ये निःशङ्का व्रजसीति । तथानुष्ठिते केवलं वित्तमादाय वाञ्छितविषयं धूर्तो गतः । सापि कण्ठनिवेशितहस्तयुगला सोद्वेगा नदीतीरे यावदुपविष्टा तिष्ठति तावत्तत्रान्तरे काचिच्छृगालिका वदनगृहीतमांसपिण्डा तत्रागमत् । अथ यावत्पश्यति तावन्नदीतीरे महामत्स्यः सलिलान्निष्क्रम्य बहिः स्थितः । तं दृष्ट्वा सा मांसपिण्डमुत्सृज्य तं मत्स्यं प्रत्युपाद्रवत् । अत्रान्तरे गृध्रस्तं दृष्ट्वा मांसपिण्डमादाय च खमुत्पपात । मत्स्योपि शृगालिकां दृष्ट्वा नद्यां प्रविष्टः । अथ सा व्यर्थश्रमा तं गृध्रं विलोकयन्ती तया देवदत्तया सस्मितमभिहिता ।

गृध्रेणापि हृतं मांसं मत्स्योपि सलिलं गतः ।
मत्स्यमांसपरिभ्रष्टे किं निरीक्षसि जम्बुके ॥१३ ॥

तच्छ्रुत्वा कोपयुक्तया शृगाल्याभिहितम् ।

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
न जारो न च भर्ता च किं निरीक्षसि नग्निके ॥ १४ ॥

एवं तस्य कथयतः पुनरन्येन जलचरेणागत्य निवेदितम् । यदहो त्वदीयं गृहमप्यपरेण महामकरेण संगृहीतम् । तच्छ्रुत्वासौ दुःखितमनास्तं गृहान्निःसारयितुमुपायं चिन्तयन्नाह । अहो पश्यत मे दैवम् ।

मित्रं चामित्रतां यातमपरं मे प्रिया मृता ।
गृहमन्येन च व्याप्तं किमद्यापि भविष्यति ॥१५ ॥

अथवा युक्तमिदमुच्यते । छिद्रेष्वनर्था बहुलीभवन्तीति ।

तत्किं करोम्यनेन सह युद्धं किंवा साम्नैव संबोध्य गृहान्निःसारयामि किंवा भेददानं करोमि । अथवामुमेव वानरं मित्रं पृच्छामि । उक्तं च ।

यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वान्हितान्गुरून् ।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ १६ ॥

इति विचिन्त्य भूयोपि जम्बूपादपमारूढं कपिमपृच्छत् । भो मित्र पश्य मे मन्दभाग्यतां यत्संप्रति गृहमपि मे बलवन्मकरेण रुद्धम् । तदहं पृच्छामि । कथय किं करोमि । सामादीनामुपायानां मध्ये कस्यात्र विषयः । स आह । भोः कृतघ्न मया निषिद्धोपि किं भूयो मामनुसरसि । नाहं तव मूर्खस्योपदेशमपि ददामि । उक्तं च यतः ।

उपदेशो न दातव्यो यादृशे तादृशे नरे ।
पश्य वानरमूर्खेण सुगृही निर्गृही कृता ॥ १७ ॥

मकर आह । कथमेत् । सोब्रवीत् ।

## कथा १२.

कस्मिंश्चिदरण्ये वृक्षशाखाकृतकुलायौ पक्षिदंपती प्रतिवसतः स्म अथ कदाचिन्मासेकालवृष्टिसमाहतासौम्यवातकम्पिततनुः कश्चिद्वानरस्तदेव वृक्षमूलमुपागतः सोपि दन्तवीणां वादयन्संकुचितकरचरणश्चटकयाभिहितः ।

हस्तपादसमायुक्तो दृश्यसे पुरुषाकृतिः ।
शीतवातहतो मूढ कथं न कुरुषे गृहम् ॥ ९८ ॥

सोपि तदाकर्ण्य व्यचिन्तयत् । अहो आत्मसंतुष्टो जीवलोको यदेषा क्षुद्रचटकात्मानं बहु मन्यते ।

स्वचित्तकल्पितो गर्वः कस्य नाम न विद्यते ।
उत्क्षिप्य टिट्टिभी पादौ शेते भङ्गभयाद्दिवः ॥ ९९ ॥

एवं विचिन्त्य तामाह ।

सूचीमुखि दुराचारे रण्डे पण्डितमानिनि ।
तूष्णीं भव करिष्यामि नो चेत्त्वां निर्गृहीमहम् ॥ १०० ॥

एवं तेन निषिद्धापि पुनराश्रयकरणोपदेशेन तमुद्वेजयति । तदासौ तं वृक्षमारुह्य तस्याः कुलायं खण्डशः कृत्वा बभञ्ज । अतोहं ब्रवीमि ।

उपदेशो न दातव्यो यादृशे तादृशे जने ।
पश्य वानरमूर्खेण सुगृही निर्गृही कृता ॥ १०१ ॥

तच्छ्रुत्वा मकर आह । भो मित्र सापराधस्यापि मे कथय पूर्वस्नेहात् । वानर आह । नाहं करिष्यामि यतस्त्वयाहं भार्यावाक्येन समुद्रे प्रक्षेपणाय नीतः । तदेतन्न युक्तम् । यद्यपि भार्या सर्वलोकादपि वल्लभा भवति तथापि न मित्रबान्धवादयो भार्यावाक्येन समुद्रे प्रक्षिप्यन्ते । तन्मूर्खो मूढचेतनो यतस्त्वया स्त्रियोर्थमेतत्कार्यमनुष्ठातुमारब्धम् । न हि स्त्रीणां कथंचिद्विश्वासमुपगच्छेत् ।

यदर्थं स्वकुलं त्यक्तं जीवितार्धं च हारितम् ।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ॥१०२॥

मकर आह । कथमेतत् । सोऽब्रवीत् ।

## कथा १३.

अस्ति कस्मिंश्चिदधिष्ठाने कोपि ब्राह्मणः । तस्य च प्रियातिप्राणप्रिया । सापि कुटुम्बेन समं प्रतिदिनं कलहं कुर्वाणा न क्षणमपि विश्राम्यति । सोपि ब्राह्मणः कलहमसहमानो भार्यावाल्लभ्यात्स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह विप्रकृष्टदेशान्तरं गतः । अथ महाटवीमध्ये ब्राह्मण्याभिहितम् । यदार्यपुत्र तृषा मां बाधते । तदुदकं कुतोप्यानय । अथासौ तद्वचनानन्तरं यावदुदकं नीत्वागच्छति तावत्तां मृतामपश्यत् । अतिवल्लभतया विषादं कुर्वन्यावद्विलपति तावदाकाशे वाचं शृणोति । यदि भो ब्राह्मण त्वं स्वजीवितस्यार्धं ददासि तत्ते जीवति ब्राह्मणी । तद्ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजीवितार्धं दत्तम् । वाक्यसममेव जीविता सा ब्राह्मणी । अथ तौ जलं पीत्वा वनफलानि भक्षयित्वा गन्तुमारब्धौ । ततः क्रमेण कस्यचिन्नगरस्य प्रवेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्यामभिहितवान् । भद्रे यावदहं भोजनं गृहीत्वा समागच्छामि तावत्त्वयात्र स्थातव्यम् । इत्यभिधाय ग्रामं गतः । अथ तस्यां पुष्पवाटिकायां पङ्गुररघट्टं खेलयमानो दिव्यगिरा गीतमुद्गिरति । तच्च श्रुत्वा कुसुमेषुणाभिहतया तया तत्सकाशं गत्वाभिहितम् । भद्र यदि मां न कामयसे तन्मदीया स्त्रीहत्या तव । पङ्गुराह । किं व्याधिग्रस्तेन मया करिष्यसि । साह । इतः प्रभृति यावज्जीवं मयात्मा भवतो दत्तः । इति ज्ञात्वा भवानप्यावाभ्यां सहागच्छतु । सोऽब्रवीत् । एवमस्तु । अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुमारब्धः । साब्रवीत् । एष पङ्गुर्बुभुक्षितः । तदेतस्यापि कियन्तमपि ग्रासं देहीति । तथानुष्ठिते ब्राह्मण्याभिहितम् । भो विप्र सहायहीनस्त्वम् । यदा ग्रामान्तरं गच्छसि

तदा मम वचनसहायोपि नास्ति । तत एनं पङ्गुं गृहीत्वा गच्छावः । सोब्रवीत् । त्वं न शक्नोष्यात्मानमात्मना वोढुं किं पुनरिमं पङ्गुम् । सा प्राह । यत्पेटाभ्यन्तरस्थमहं नेष्यामि । अथ तत्कृतकवचनव्यामोहितचित्तेन तेनापि प्रतिपन्नम् । तथानुष्ठिते चान्यस्मिन्दिने कूपोपकण्ठविश्रान्तो ब्राह्मणस्तया पङ्गुपुरुषासक्तया संप्रेर्य कूपान्तः पातितः । सापि पङ्गुं गृहीत्वा कस्मिंश्चिन्नगरे प्रविष्टा । तत्र च चौर्यरक्षानिमित्तं राजपुरुषैरितस्ततो भ्रमद्भिस्तन्मस्तकस्थां पेटां दृष्ट्वा बलादाच्छिद्य राज्ञोग्रे नीता । यावत्तामुद्घाटयति राजा तावत्पङ्गुं ददर्श । ततः सा ब्राह्मणी विलापान्कुर्वती राजपुरुषपदैरेव तत्रागता राज्ञा पृष्टा । को वृत्तान्त इति । साब्रवीत् । ममैष भर्ता व्याधिग्रस्तो दायादसमूहैरुद्वेजितो मया स्नेहव्याकुलचित्तया शिरसि कृत्वा त्वत्सकाशमानीतः । एतच्छ्रुत्वा राजाब्रवीत् । यन्मम त्वं भगिनी । ग्रामद्वयं गृहीत्वा भर्त्रा सह भोगान्भुञ्जाना सुखेन तिष्ठ । अथ स ब्राह्मणो दैववशात्केनापि साधुना कूपादुत्तारितः परिभ्रमंस्तदेव नगरमायातः । तया दुष्टभार्यया दृष्टो राज्ञे निवेदितः । राजन् अय मद्भर्तुर्वैरी समायातः । राज्ञापि वधार्थं समादिष्टः । सोब्रवीत् । देव अनया मम सत्कं किंचिद्गृहीतमस्ति । ततो यदि त्वं धर्मवत्सलस्ततो दापय । राजाब्रवीत् । भद्रे त्वयास्य सत्कं किंचिद्गृहीतमास्ति तत्समर्पय । सा प्राह । देव मया न किंचिद्गृहीतम् । ब्राह्मण आह । यन्मया त्रिवाचिकं स्वजीवितार्धं तव दत्तं तद्देहि मे । अथ सा राजभयात्तत्रैव त्रिवाचिकमेव जीवितं मया दत्तमिति जल्पन्ती प्राणैर्विमुक्ता । ततः सविस्मयं राजाब्रवीत् । किमेतदिति । ब्राह्मणेनापि सकलोपि वृत्तान्तस्तस्मै निवेदितः । अतोहं ब्रवीमि ।

यदर्थं स्वकुलं त्यक्तं जीवितार्धं च हारितम् ।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ॥१०३॥

अथ तच्छ्रुत्वा मकर आह । भो वयस्य मे कृतद्रोहबुद्धेः परमकृपया ममोपरि प्रसादं कृत्वा शोभनोपायः कथ्यतां येनोपायेन सुखेन

गृहं प्राप्नोमि । तच्छ्रुत्वा कपिराह । भो दुर्बुद्धे भवान्कथितमपि न संविधास्यति । यथा ।

सतां वचनमादिष्टं यो मोहादवमन्यते ।
स एव नाशमाप्नोति सिंहाद्दासेरको यथा ॥ १०४ ॥

मकर आह । कथमेतत् । सोऽब्रवीत् ।

## कथा १४.

अस्ति कस्मिंश्चिदधिष्ठाने मन्दमतिनामा रथकारः प्रतिवसति स्म । तेन स्वकर्मानभिज्ञेनोष्ट्री गृहीता । तस्याः खादनपानादिकं कुर्वन्कालं नयति । ततो महतोष्ट्रेण संगमो जातः । सा गर्भं दधार । अथ प्रसवसमये प्रसूता । दासेरको जातः । अथ नगरनिकटवाटिकायां धवखदिरपलाशाम्रजम्बून्यग्रोधादीनां पल्लवभक्षणादहर्निशं पीवरतनुरुष्ट्री संजाता । सोऽपि दासेरको महानुष्ट्रः संजातः । ततः स नित्यमेव दुग्धं नीत्वा कुटुम्बं परिपालयति । रथकारेण वल्लभत्वाद्दासेरकग्रीवायां घण्टा बद्धा । पश्चाद्रथकारो व्यचिन्तयत् । किमन्यैर्दुष्कृतकर्मभिः । एतदेवोष्ट्रीपरिपालनमस्य कुटुम्बस्य भरणपोषणे भव्यं जातम् । तत्किमन्येन व्यापारेण । तत एतस्या उपरि द्रम्मा गृह्यन्ते । एवं विचिन्त्य गृहमागत्य प्रियामाह । मयास्या उष्ट्र्या उपरि बहवो द्रम्मा ग्रहीतव्याः । ततस्त्वयैषा यत्नेन रक्षणीया यावदहमपरामुष्ट्रीं गृहीत्वागच्छामि । ततश्च द्रम्मानादाय गुर्जरग्रामे गत्वा करभाः संक्रीताः । अथ तेन महद्यूथं कृत्वा रक्षापुरुषाणां प्रतिवर्षं करभमेकं च निवेद्याहर्निशं दुग्धपानमादिष्टम् । एवं स रथकारो नित्यमेवोष्ट्रव्यापारं कुर्वन्सुखेन तिष्ठति । अथ ते दासेरका अधिष्ठानोपवन आहारार्थं गच्छन्ति । कोमलवल्लीर्भक्षयित्वा महासरसि पानीयं पीत्वा च सायं सर्वे मन्दंमन्दं लीलया गृह आगच्छन्ति । स च मदातिरेकात्पृष्ठ आगत्य मिलति । ततस्तैरभिहितम् । अहो मन्दमतिरयं दासेरको यूथाद्भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन्नागच्छति । यदि कस्यापि दुष्टस्य सत्त्वस्य

संदर्शे पतिष्यति तन्नूनं मरिष्यति । अथ तेषां तद्वनं गाहमानानां कश्चित्सिंहो घण्टारवमाकर्ण्य समायातः । यावदवलोकयति तावदुष्ट्री-दासेरकानां यूथं गच्छति । एकस्तु पृष्ठे क्रीडां कुर्वन्वल्लीं चरन्यावद्गच्छति तावदन्यदासेरकाः पानीयं पीत्वा स्वगृहे गताः । सोपि चिरान्निष्क्रम्य यावद्दिशोवलोकयति तावन्न कथंचिन्मार्गं वेत्ति । यूथाद्भ्रष्टो महाशब्दं कुर्वन्मन्दंमन्दं यावत्किंचिद्दूरं गच्छति तावच्छब्दानुसारेण सञ्जितक्रमो भूत्वा सिंहोग्रे स्थितः । यावदुष्ट्रः समीपमागतस्तावत्सिंहेनोल्ललयित्वा ग्रीवायां गृहीत्वा मारितः । अतोहं ब्रवीमि ।

सतां वचनमादिष्टं यो मोहादवमन्यते ।
स एव नाशमाप्नोति सिंहाद्दासेरको यथा ।। १०५ ।।

अथ तच्छ्रुत्वा मकर आह । भद्र ।

प्राहुः साप्तपदं मैत्रं जनाः शास्त्रविचक्षणाः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ।। १०६ ।।

उपदेशप्रदातॄणां नराणां हितमिच्छताम् ।
इह लोके परत्रे च व्यसनं नोपपद्यते ।। १०७ ।।

ततः कृतघ्नस्य मे कुरु प्रसादमुपदेशप्रदानेन ।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ।। १०८ ।।

तदाकर्ण्य वानर आह । भद्र यद्येवं तद्गत्वा तेन सह युद्धं कुरु । उक्तं च ।

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समं तुल्यपराक्रमैः ।। १०९ ।।

मकर आह । कथमेतत् । सोब्रवीत् ।

## कथा १५.

अस्ति कस्मिंश्चिद्वने महाचतुरको नाम शृगालः प्रतिवसति स्म ।

तेन कदाचिदरण्ये स्वयंमृतो गजः समासादितः । तस्य समन्ताद्भ्रमति । परं कठिनत्वचं भेत्तुं न शक्नोति । तत्रान्तरे भ्रमंस्तत्र देशे कश्चित्सिंहः समायातः । तं दृष्ट्वा स क्षितितलविन्यस्तमौलिः प्रणम्य प्रोवाच । स्वामिन् त्वदीयो लाकुटिकः सन्नहं गजं रक्षयामि । तद्भक्षयतु स्वामी । तं दृष्ट्वा सिंह आह । भो नाहमन्यहतं सत्त्वं कदाचिद्भक्षयामि । तन्मया प्रसादीकृत एष ते गजः । तच्छ्रुत्वा सानन्दमाह । युक्तमेतत्स्वामिनः । उक्तं च ।

अन्त्यावस्थागतोपि महान्स्वगुणाञ्जहाति न शुद्धतया ।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तमुक्तोपि ॥ ११० ॥

तदाकर्ण्य सिंहो गतः । अथ तस्मिन्गते कश्चिद्व्याघ्रः समायातः । तमपि दृष्ट्वा व्यचिन्तयत् । कथमेको दुरात्मा सिंहस्तावत्प्रणिपातेनापवाहितः । तदस्य कथमतिवाहनं भविष्यति । शूरोयं भेदं विना साध्यो न भविष्यति । उक्तं च ।

न यस्य शक्यते कर्तुं साम दानमथापि वा ।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥ १११ ॥

यतः सर्वगुणसंपन्नोपि भेदेन बध्यते । उक्तं च ।

अत्यच्छेनाविरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भिन्नेन संप्राप्तं मौक्तिकेन निबन्धनम् ॥ ११२ ॥

एवं संप्रधार्य तस्याभिमुखो भूत्वेषदुन्नतकंधरः प्रोवाच । माम अद्य भवानत्र मृत्युमुखे प्रविष्टः । एष गजो व्यापादितः सांप्रतं सिंहेन । स च मां रक्षपालं निधाय स्नानार्थं गतः । तेन च मम निवेदितं गच्छता । यदि व्याघ्रः समागच्छति तन्मम सुगुप्तं निवेदनीयं येन मया निर्व्याघ्रं वनं कार्यम् । यतो व्याघ्रेणैकेन मया हतो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः । तच्छ्रुत्वा भयत्रस्तमनाः स आह । भो भगिनीसुत देहि मे प्राणदक्षिणां त्वया यतश्चिरायागतस्य तस्य मदीया किंवदन्ती नाख्येया । एवमुक्त्वा सत्वरं प्रनष्टः । अथ तस्मिन्गते कश्चिद्वानरः समायातः । तमपि दृष्ट्वा व्यचिन्तयत् ।

दृढदंष्ट्रोयम् । तदस्य पार्श्वाद्गजचर्मच्छेदं कारयामि । एवं निश्चित्य तमुवाच । भो भगिनीसुत चिराद्दृष्टोसि । अपरं बुभुक्षितः समागतस्त्वमतिथिश्च । एष गजः सिंहेन हतस्तिष्ठति । अहं तु रक्षपालः । अतो वदामि । मांसं भक्षयित्वा तृप्तिं कृत्वा व्रज यद्यावत्स नागच्छति । स आह । माम यद्येवं तन्न कार्यं मे मांसाशनेन । यतो जीवन्नरो भद्रशतानि पश्यति । उक्तं च ।

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ ११३ ॥

तदहं यास्यामि । शृगाल आह । भो विश्रब्धो भक्षय त्वम् । तस्यागमनं दूरतोहं ते निवेदयिष्यामि । तथानुष्ठिते चर्मभेदं जातं विज्ञाय तेनाभिहितम् । भो भगिनीसुत गम्यतां गम्यताम् । एष सिंहः समायाति । तच्छ्रुत्वा सोपि प्रनष्टः । अथ यावदसौ वानरकृतद्वारेण तन्मांसं भक्षयति तावदपरः शृगालः संक्रुद्धः समायातः । तमपि दृष्ट्वेमं श्लोकमपठत् ।

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ११४ ॥

ततस्तं जित्वा स्वदंष्ट्राभिर्विदार्य दिशोभाजं कृत्वा स्वयं सुखेन चिरकालं तन्मांसं बुभुजे । तत्त्वमपि युद्धेन तं परिभवं नीत्वा दिशोभाजं कुरु । नो चेद्विनाशमवाप्स्यसि । उक्तं च ।

संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं स्त्रीषु चापल्यं संभाव्यं ज्ञातितो भयम् ॥ ११५ ॥

तथा च ।

सुभक्ष्याणि विचित्राणि शिथिलाश्चैव योषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥ ११६ ॥

मकर आह । कथमेतत् । सोब्रवीत् ।

## कथा १६.

अस्ति कस्मिंश्चिदधिष्ठाने चित्राङ्गो नाम सारमेयः प्रतिवसति स्म। एकदा महद्दुर्भिक्षमभवत् । अन्नाभावेन सर्वोपि सारमेयजातिर्निष्कुलतां गच्छति । अत्रान्तरे स चित्राङ्गः क्षुत्क्षामकण्ठः सुभिक्षं श्रुत्वान्यदेशं गतः । तत्रैकस्मिन्गृहे शिथिलगृहिणीप्रसादेन तृप्तिं गच्छति । परं बहिर्निर्गतोन्यैः सारमेयैश्चतुर्दिशं दंष्ट्राभिर्विदार्यते । ततस्तेन विचिन्तितम् । अहो वरं स्वदेशो यत्र दुर्भिक्षेपि सुखेन स्थीयते न कोपि युद्धं करोति । तत्स्वदेशं गच्छामि । इत्यवधार्य तथाकरोत् । अथासौ देशान्तरात्समायातः सर्वैरपि स्वजनैः पृष्टः। भोश्चित्राङ्ग कथयास्माकं देशान्तरवार्त्ताम् । कीदृग्देशः । किंचेष्टितो लोक इति । स आह । किं कथ्यते देशस्य विषये ।

सुभक्ष्याणि विचित्राणि शिथिलाश्चैव योषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥ ११७ ॥

सोपि तच्छ्रुत्वा मरणे कृतनिश्चयो भूत्वा वानरमनुज्ञाप्य स्वाश्रयं गतः । तत्र च तेन गृहप्रविष्टेन सह विग्रहं कृत्वा तं व्यापाद्य स्वाश्रयं सुखेनाधिष्ठितवान् । अथवा साध्विदमुच्यते ।

अकृत्वा पौरुषं या श्रीः किं तयापि सुभोग्यया ।
जरद्गवोपि चाश्नाति दैवादुपगतं तृणम् ॥ ११८ ॥

॥ इति समाप्तं लब्धप्रणाशं नाम चतुर्थं तन्त्रम् ॥

अथेदमारभ्यतेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं यस्यायमादिमः श्लोकः ।

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥ १ ॥

तद्यथानुश्रूयते ।

## कथा १.

अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम् । तत्र माणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च धर्मार्थकामकर्माणि कुर्वतो विधिवशाद्धनक्षयः संजातः । ततो विभवक्षयादपमानपरंपरया परं विषादं गतः । रात्रौ सुप्तश्चिन्तितवान् । अहो धिगियं दरिद्रता । उक्तं च ।

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे वित्तविहीनस्य पुरुषस्य ॥ २ ॥
मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं वित्तविहीनो यदा पुरुषः ॥ ३ ॥
प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः ।
बुद्धिर्बुद्धिमतामपि कुटुम्बभरचिन्तया सततम् ॥ ४ ॥
नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य ।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥
गगनमिव नष्टतारं शुष्कं सरः श्मशानमिव रौद्रम् ।
प्रियदर्शनमपि रूक्षं भवति गृहं धनविहीनस्य ॥ ६ ॥
न विभाव्यन्ते लघवो वित्तविहीनाः पुरोऽपि निवसन्तः ।
सततं जातविनष्टाः पयसामिव बुद्बुदाः पयसि ॥ ७ ॥
सुकुलं कुशलं सुजनं विहाय कुलकुशलशीलविकलेऽपि ।
आढ्ये कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥ ८ ॥
विफलमिह पूर्वसुकृतं विद्यावन्तोऽपि कुलसमुद्भूताः ।
यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥ ९ ॥

लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम् ।
सर्वमलज्जाकरमिह यत्कुर्वन्तीह परिपूर्णाः ॥ १० ॥

एवं संप्रधार्य भूयोप्यचिन्तयत् । यदहमनशनं कृत्वा प्राणानुत्सृजामि । किमनेन व्यर्थजीवितव्यसनेन । एवं निश्चयं कृत्वा सुप्तः । अथ तस्य स्वप्ने पद्मनिधिः क्षपणकरूपी दर्शनं गत्वा प्रोवाच । भोः श्रेष्ठिन् मा त्वं वैराग्यं गच्छ । अहं पद्मनिधिस्तव पूर्वपुरुषोपार्जितः । तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि । तत्त्वयाहं लकुटप्रहारेण शिरसि ताडनीयो येन कनकमयो भूत्वाक्षयो भवामि । अथ प्रातः प्रबुद्धः सन्स्वप्नं स्मरंश्चिन्ताचक्रमारूढस्तिष्ठति । अहो सत्योयं स्वप्नः किंवासत्यो भविष्यति न ज्ञायते । अथवा नूनं मिथ्या भाव्यं यतोहं केवलं वित्तमेव चिन्तयामि । उक्तं च ।

व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना ।
कामार्त्तेनाथ मत्तेन दृष्टः स्वप्नो निरर्थकः ॥ ११ ॥

एतस्मिन्नन्तरे तस्य भार्यया कश्चिन्नापितः पादप्रक्षालनायाहूतः । अत्रान्तरे च यथानिर्दिष्टः क्षपणकः सहसा प्रादुर्बभूव । अथ स तमालोक्य प्रहृष्टमना यथासन्नकाष्ठदण्डेन तं शिरस्यताडयत् । सोपि सुवर्णमयो भूत्वा तत्क्षणाद्भूमौ निपतितः । अथ तं स श्रेष्ठी निभृतं स्वगृहमध्ये कृत्वा नापितं संतोष्य प्रोवाच । यदेतद्धनं वस्त्राणि च मया दत्तानि गृहाण । भद्र पुनः कस्यचिन्नाख्येयो वृत्तान्तः । नापितोपि स्वगृहं गत्वा व्यचिन्तयत् । नूनमेते सर्वेपि नग्नकाः शिरसि दण्डहताः काञ्चनमया भवन्ति । तदहमपि प्रातः प्रभूतानाहूय लकुटैः शिरसि हन्मि येन प्रभूतं हाटकं मे भवति । एवं चिन्तयतो महता कष्टेन निशातिचक्राम । अथ प्रभातेभ्युत्थाय बृहल्लकुटमेकं प्रगुणीकृत्य क्षपणकविहारं गत्वा जिनेन्द्रस्य प्रदक्षिणात्रयं विधाय जानुभ्यामवनिं गत्वा वक्त्रद्वारन्यस्तोत्तरीयाञ्चलस्तारस्वरेणेमं श्लोकमपठत् ।

जयन्ति ते जिना येषां केवलज्ञानशालिनाम् ।
आ जन्मनः स्मरोत्पत्तौ मानसेनोषरायितम् ॥ १२ ॥

अन्यच्च ।

सा जिह्वा या जिनं स्तौति तच्चित्तं यज्जिने रतम् ।
तावेव च करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ १३ ॥

तथा च ॥

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।
मिथ्याकारुणिकोसि निर्घृणतरस्त्वत्तः कुतोन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ १४ ॥

एवं संस्तुत्य ततः प्रधानक्षपणकमासाद्य क्षितिनिहितजानुचरणो नमोस्तु वन्द इत्युच्चार्य लब्धधर्मवृद्ध्याशीर्वादः सुखमालिकानुग्रहलब्धव्रतादेश उत्तरीयनिबद्धग्रन्थिः सप्रश्रयमिदमाह । भगवन्नद्य विहरणक्रिया समस्तमुनिसमेतेनास्मद्गृहे कर्तव्या । स आह । भोः श्रावक धर्मज्ञोपि किमेवं वदसि । किं वयं ब्राह्मणसमाना यत आमन्त्रणं करोषि । वयं सदैव तत्कालपरिचर्यया भ्रमन्तो भक्तिभाजं श्रावकमवलोक्य तस्य गृहे गच्छामस्तेन कृच्छ्रादभ्यर्थिताः । तद्गृहे प्राणधारणमात्रामशनक्रियां कुर्मः । तद्गम्यतां नैवं भूयोपि वाच्यम् । तच्छ्रुत्वा नापित आह । भगवन् वेद्म्यहं युष्मद्धर्मम् । परं भवतो बहुश्रावका आह्वयन्ति । सांप्रतं पुनः पुस्तकाच्छादनयोग्यानि कर्पटानि बहुमूल्यानि प्रगुणीकृतानि तथा पुस्तकानां लेखनाय लेखकानां च वित्तं दत्तमास्ते । तत्सर्वथा तत्कालोचितं कार्यम् । ततो नापितोपि स्वगृहं गतः । तत्र च गत्वा खादिरमयं लकुटं सज्जीकृत्य कपाटयुगलं द्वारे समाधाय सार्धप्रहरद्वयोद्देशे भूयोपि विहारद्वारमाश्रित्य सर्वान्क्रमेण निष्क्रामतो गुरुप्रार्थनया स्वगृहमानयत् । तेपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान्परित्यज्य प्रहृष्टमनसस्तस्य पृष्ठतो ययुः । अथवा साध्विदमुच्यते ।

एकाकी गृहसंत्यक्तः पाणिपात्रो दिगम्बरः ।
सोपि संवाह्यते लोके तृष्णया पश्य कौतुकम् ॥ १५ ॥

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते ॥ १६ ॥

अपरं गृहमध्ये तान्प्रवेश्य द्वारं निभृतं विधाय लकुटप्रहारैः शिरस्यताडयत् । तेपि ताड्यमाना एके मृता अन्ये भिन्नमस्तकाः फूत्कर्तुमुपचक्रमिरे । अत्रान्तरे तमाक्रन्दमाकर्ण्य कोटरक्षपालैरभिहितम् । भो भोः किमयं महान्कोलाहलो नगरमध्ये । तद्गम्यतां गम्यताम् । ते च सर्वे तदादेशकारिणस्तत्सहिता वेगात्तद्गृहं गताः । तावद्रुधिरप्लावितदेहाः पलायमाना नग्नका दृष्टाः । तैः स नापितो बद्धः । हतशेषैः सह धर्माधिष्ठानं नीतः । तैर्नापितः पृष्टः । भोः किमेतद्भवता कुकृत्यमनुष्ठितम् । स आह । किं करोमि । मया श्रेष्ठिमणिभद्रगृहे दृष्ट एवंविधो व्यतिकरः । सोपि सर्वं मणिभद्रवृत्तान्तं यथादृष्टमकथयत् । ततः श्रेष्ठिनमाहूय भणितवन्तः । भोः श्रेष्ठिन् किं त्वया कश्चित्क्षपणको व्यापादितः । ततस्तेनापि सर्वः क्षपणकवृत्तान्तस्तेषां निवेदितः । अथ तैरभिहितम् ।

अहो शूलमारोप्यतामसौ दुष्टात्मा कुपरीक्षितकारी नापितः । तथानुष्ठिते तैरभिहितम् ।

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥ १७ ॥

अथवा साध्विदमुच्यते ।

अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम् ।
पश्चाद्भवति संतापो ब्राह्मण्या नकुले यथा ॥ १८ ॥

मणिभद्र आह । कथमेतत् । ते धर्माधिकारिणः प्रोचुः ।

## कथा २.

कस्मिंश्चिदधिष्ठाने देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म । तस्य भार्या प्रसूता सुतमजनयत् । तस्मिन्नेव दिने नकुली नकुलं प्रसूता । अथ सा सुतवत्सला दारकवत्तमपि नकुलं स्तन्यदानाभ्यङ्गपोषणा-

दिभिः पुपोष । परं तस्य न विश्वसिति यत्कदाचिदेष स्वजातिदोषवशादस्य दारकस्य विरुद्धमाचरिष्यतीति । एवं जानाति स्वचित्ते । उक्तं च ।

कुपुत्रोपि भवेत्पुंसां हृदयानन्दकारकः ।
दुर्विनीतः कुरूपोपि मूर्खोपि व्यसनी खलः ॥ १९ ॥
एवं च भाषते लोकश्चन्दनं किल शीतलम् ।
पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते ॥ २० ॥
सौहृदस्य न वाञ्छन्ति जनकस्य हितस्य च ।
लोकाः प्रपालकस्यापि यथा पुत्रस्य बन्धनम् ॥ २१ ॥

अथ सा कदाचिच्छय्यायां पुत्रं शाययित्वा जलकुम्भमादाय पतिमुवाच । ब्राह्मण जलार्थमहं तडागे यास्यामि । त्वया पुत्रोयं नकुलाद्रक्षणीयः । अथ तस्यां गतायां पृष्ठे ब्राह्मणोपि शून्यं गृहं मुक्त्वा भिक्षार्थं क्वचिन्निर्गतः । अत्रान्तरे दैववशात्कृष्णसर्पो बिलान्निष्क्रान्तः । नकुलोपि तं स्वभाववैरिणं मत्वा भ्रातू रक्षणार्थं सर्पेण सह युद्ध्वा सर्पं खण्डशः कृतवान् । ततो रुधिराप्लावितवदनः सानन्दं स्वव्यापारप्रकाशनार्थं मातुः संमुखे गतः । मातापि तं रुधिरक्लिन्नमुखमवलोक्य शङ्कितचित्ता यदनेन दुरात्मना दारको भक्षित इति विचिन्त्य कोपात्तस्योपरि तं जलकुम्भं चिक्षेप । एवं सा नकुलं व्यापाद्य यावत्प्रलपन्ती गृह आगच्छति तावत्सुतस्तथैव सुप्तस्तिष्ठति । समीपे कृष्णसर्पं खण्डशः कृतमवलोक्य पुत्रवधशोकेनात्मशिरो वक्षःस्थलं च ताडयितुमारब्धा । अत्रान्तरे ब्राह्मणो गृहीतनिर्वापः समायातो यावत्पश्यति तावत्पुत्रशोकाभितप्ता ब्राह्मणी प्रलपति । भो भो लोभात्मन् । लोभाभिभूतेन त्वया न कृतं मद्वचः । तदनु तत्र सांप्रतं पुत्रमृत्युदुःखवृक्षफलम् । अथवा साध्विदमुच्यते ।

अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् ।
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके ॥ २२ ॥

ब्राह्मण आह । कथमेतत् । सा प्राह ।

## कथा ३.

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रतां गता वसन्ति स्म । ते चापि दारिद्र्योपहताः परस्परं मन्त्रं चक्रुः । अहो धिगियं दरिद्रता । उक्तं च ।

वरं वनं व्याघ्रगजादिसेवितं
जलेन हीनं बहुकण्टकावृतम् ।
तृणानि शय्या परिधानवल्कलं
न बन्धुमध्ये धनहीनजीवितम् ॥ २३ ॥

तथा च ।

स्वामी द्वेष्टि सुसेवितोपि सहसा प्रोज्झन्ति सद्बान्धवा
राजन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः ।
भार्या साधुसुवंशजापि भजते नो यान्ति मित्राणि च
न्यायारोपितविक्रमाण्यपि नृणां येषां न हि स्याद्धनम् ॥ २४ ॥

शूरः सुरूपः सुभगश्च वाग्मी
शस्त्राणि शास्त्राणि विदांकरोतु ।
अर्थं विना नैव यशश्च मानं
प्राप्नोति मर्त्योत्र मनुष्यलोके ॥ २५ ॥

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
बाह्यः क्षणेन भवतीति विचित्रमेतत् ॥ २६ ॥

तद्गच्छामः कुत्रचिदर्थाय । इति संमन्त्र्य स्वदेशं पुरं च स्वसुहृत्सहितं बान्धवयुतं गृहं च परित्यज्य प्रस्थिताः । अथवा साध्विदमुच्यते ।

सत्यं परित्यजति मुञ्चति बन्धुवर्गं
शीघ्रं विहाय जननीमपि जन्मभूमिम् ।
संत्यज्य गच्छति विदेशमभीष्टलोकं
चिन्ताकुलीकृतमतिः पुरुषोत्र लोके ॥ २७ ॥

एवं क्रमेण गच्छन्तोवन्तीं प्राप्ताः । तत्र सिप्राजले कृतस्नाना महाकालं प्रणम्य यावन्निर्गच्छन्ति तावद्भैरवानन्दो नाम योगी संमुखो बभूव । ततस्तं ब्राह्मणोचितविधिना संभाव्य तेनैव सह तस्य मठं जग्मुः । अथ तेन ते पृष्टाः । कुतो भवन्तः समायाताः । क्व यास्यथ । किं प्रयोजनम् । ततस्तैरभिहितम् । वयं सिद्धियात्रिकास्तत्र यास्यामो यत्र धनाप्तिर्मृत्युर्वा भविष्यतीत्येष निश्चयः । उक्तं च ।

दुष्प्राप्याणि बहूनि च लभ्यन्ते वाञ्छितानि द्रविणानि ।
अवसरतुलिताभिरलं तनुभिः साहसिकपुरुषाणाम् ॥ २८ ॥

तथा च ।

पतति कदाचिन्नभसः खाते पातालतोपि जलमेति ।
दैवमचिन्त्यं कारणबलवान्ननु पुरुषकारोपि ॥ २९ ॥
अभिमतसिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण ।
दैवमिति यदपि कथयसि पुरुषगुणः सोप्यदृष्टाख्यः ॥ ३० ॥
भयमतुलं गुरुलोकात्तृणमिव तुलयन्ति साधु साहसिकाः ।
प्राणानद्भुतमेतच्चरितं चरितं ह्युदाराणाम् ॥ ३१ ॥
क्लेशस्याङ्गमदत्त्वा सुखमेव सुखानि नेह लभ्यन्ते ।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ ३२ ॥
तस्य कथं न चला स्यात्पत्नी विष्णोर्नृसिंहकस्यापि ।
मासांश्चतुरो निद्रां यः सेवति जलगतः सततम् ॥ ३३ ॥
दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम् ।
जयति तुलामधिरूढो भास्वानिह जलदपटलानि ॥ ३४ ॥

तत्कथ्यतामस्माकं कश्चिद्धनोपायो विवरप्रवेशशाकिनीसाधनश्मशानसेवनमहामांसविक्रयसाधकवर्तिप्रभृतीनामेकतम इति । अद्भुतशक्तिर्भवाञ्श्रूयते । वयमप्यतिसाहसिकाः । उक्तं च ।

महान्त एव महतामर्थं साधयितुं क्षमाः ।
ऋते समुद्रादन्यः को बिभर्ति वडवानलम् ॥ ३५ ॥

भैरवानन्दोपि तेषां सिद्ध्यर्थं बहूपायं सिद्धिवर्तिचतुष्टयं कृत्वार्पयत् । आह च । गम्यतां हिमालयदिशि । तत्र संप्राप्तानां यत्र वर्तिः पतिष्यति तत्र निधानं प्राप्स्यथासंदिग्धम् । तत्र स्थानं खनित्वा निधिं गृहीत्वा व्याघुट्यताम् । तथानुष्ठिते तेषां गच्छतामेकतमस्य हस्ताद्वर्तिर्निपपात । अथासौ यावत्तं प्रदेशं खनति तावत्ताम्रमयी भूमिः । ततस्तेनाभिहितम् । अहो गृह्यतां स्वेच्छया ताम्रम् । अन्ये प्रोचुः । भो मूढ किमनेन क्रियते । तत्प्रभूतमपि दारिद्र्यं न नाशयति । तदुत्तिष्ठाग्रतो गच्छामः । सोब्रवीत् । यान्तु भवन्तो नाहमग्रे यास्यामि । एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः । ते त्रयोप्यग्रे प्रस्थिताः । अथ किंचिन्मात्रं गतस्याग्रेसरस्य वर्तिर्निपपात । सोपि यावत्खनितुमारब्धस्तावद्रूप्यमयी क्षितिः । ततः प्रहर्षितः प्राह । यद्भो गृह्यतां यथेच्छया रूप्यम् । नाग्रे गन्तव्यम् । तावूचतुः । भोः पृष्ठतस्ताम्रमयी भूमिरग्रतो रूप्यमयी । तन्नूनमग्रे सुवर्णमयी भविष्यति । तदनेन प्रभूतेनापि दारिद्र्यनाशो न भवति । तदावामग्रे यास्यावः । एवमुक्त्वा द्वावप्यग्रे प्रस्थितौ । सोपि स्वशक्त्या रूप्यमादाय निवृत्तः । तयोरपि गच्छतोरेकस्याग्रे वर्तिः पपात । सोपि प्रहृष्टो यावत्खनति तावत्सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह । भो गृह्यतां स्वेच्छया सुवर्णम् । सुवर्णादन्यन्न किंचिदुत्तमं भविष्यति । स प्राह । मूढ न किंचिद्वेत्सि । प्राक्ताम्रं ततो रूप्यं ततः सुवर्णं तन्नूनमतः परं रत्नानि भविष्यन्ति येषामेकतमेनापि दारिद्र्यनाशो भवति । तदुत्तिष्ठाग्रे गच्छावः । किमनेन भारभूतेनापि प्रभूतेन । स आह । गच्छतु भवान् । अहमत्र स्थितस्त्वां प्रतिपालयिष्यामि । तथानुष्ठिते सोपि गच्छन्नेकाकी ग्रीष्मार्कप्रतापसंतप्ततनुः पिपासाकुलितः सिद्धिमार्गच्युत इतश्चेतश्च बभ्राम । अथ भ्राम्यन्स्थलोपरि पुरुषमेकं रुधिरप्लावितगात्रं भ्रमच्चक्रमस्तकमपश्यत् । ततो द्रुततरं गत्वा तमवोचत् । भोः को भवान् । किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि । तत्कथय मे यदि कुत्रचिज्जलमस्ति । एवं तस्य प्रवदतस्तच्चक्रं तत्क्षणात्तस्य शिरसो ब्राह्मणमस्तके चटितम् । स आह । भद्र किमेतत् । स आह । यन्ममाप्येवमेवैतच्छिरसि चटितम् ।

तत्कथय कदैतदुत्तरिष्यति । महती मे वेदना वर्तते । स आह । यदा त्वमिव कश्चिद्धृतसिद्धिवर्तिरेवमागत्य त्वामालापयिष्यति तदा तस्य मस्तके चटिष्यति । स आह । कियान्कालस्तवैवं स्थितस्य । स आह । सांप्रतं को राजा धरणीतले । स आह । वीणावत्सराजः । स आह । अहं तावत्कालसंख्यां न जानामि । परं यदा रामो राजासीत्तदाहं दारिद्र्योपहतः सिद्धिवर्तिमादायानेन पथा समायातः । ततो मयान्यो नरो मस्तकधृतचक्रो दृष्टः पृष्टश्च । ततश्चैतज्जातम् । स आह । भद्र कथं तवैवं स्थितस्य भोजनजलप्राप्तिरासीत् । स आह । भद्र धनदेन निधानहरणभयात्सिद्धानामेतद्भयं दर्शितम् । तेन कश्चिदपि नागच्छति । यदि कश्चिदायाति स क्षुत्पिपासानिद्रारहितो जरामरणवर्जितः केवलमेवं वेदनामनुभवतीति । तदाज्ञापय मां मुक्तोस्मि । सांप्रतं स्वगृहं यास्यामि । इत्युक्त्वा गतः । अथ तस्मिंश्चिरयति स सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपङ्क्त्या यावत्किंचिद्वनान्तरमागच्छति तावद्रुधिरप्लावितशरीरस्तीक्ष्णचक्रेण मस्तके भ्रमता सवेदनः क्वणन्नुपविष्टस्तिष्ठति । ततः समीपवर्तिना भूत्वा सबाष्पं पृष्टः । भद्र किमेतत् । स आह । विधिनियोगः । स आह । कथं तत् । कथय कारणमेतस्य । सोपि तेन पृष्टः सर्वं चक्रवृत्तान्तमकथयत् । तच्छ्रुत्वासौ तं विगर्हयन्निदमाह । भो निषिद्धस्त्वं मयानेकशो न शृणोषि मे वाक्यम् । तत्किं क्रियते । विद्यावानपि कुलीनोपि बुद्धिरहितः । अथवा साध्विदमुच्यते ।

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा ।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥ ३६ ॥

चक्रधर आह । कथमेतत् । सुवर्णसिद्धिराह ।

## कथा ४.

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परं मित्रभावमुपगता वसन्ति स्म । तेषां त्रयः शास्त्रपारं गताः परंतु बुद्धिरहिताः । एकस्तु

बुद्धिमान्केवलं शास्त्रपराङ्मुखः। अथ तैः कदाचिन्मित्रैर्मन्त्रितम्। को गुणो विद्याया येन देशान्तरं गत्वा भूपतीन्परितोष्यार्थोपार्जना न क्रियते। तत्पूर्वदेशं गच्छामः। तथानुष्ठिते कंचिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह। अहो अस्माकमेकश्चतुर्थो मूढः केवलं बुद्धिमान्। न च राजप्रतिग्रहो बुद्धया लभ्यते विद्यां विना। तन्नास्मै स्वोपार्जितं दास्यामि। तद्गच्छतु गृहम्। ततो द्वितीयेनाभिहितम्। भोः सुबुद्धे गच्छ त्वं स्वगृहे यतस्ते विद्या नास्ति। ततस्तृतीयेनाभिहितम्। अहो न युज्यत एवं कर्तुं यतो वयं बाल्यात्प्रभृत्येकत्र क्रीडिताः। तदागच्छतु महानुभावोस्मदुपार्जितवित्तस्य संविभागी भविष्यतीति। उक्तं च।

किं तया क्रियते लक्ष्म्या या वधूरिव केवला।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ ३७ ॥

तथा च।

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां च वसुधैव कुटुम्बकम् ॥ ३८ ॥

तदागच्छत्वेषोपीति। तथानुष्ठिते तैर्मार्गाश्रितैरटव्यां मृतसिंहस्यास्थीनि दृष्टानि। ततश्चैकेनाभिहितम्। यदहो विद्याप्रत्ययः क्रियते। किंचिदेतत्सत्त्वं मृतं तिष्ठति। तद्विद्याप्रभावेन जीवसहितं कुर्मः। अहमस्थिसंचयं करोमि। ततश्चैकेनौत्सुक्यादस्थिसंचयः कृतः। द्वितीयेन चर्ममांसरुधिरं संयोजितम्। तृतीयोपि यावज्जीवं संचारयति तावत्सुबुद्धिना निषिद्धः। भोस्तिष्ठतु भवान्। एष सिंहो निष्पाद्यते। यद्येनं सजीवं करिष्यसि ततः सर्वानपि व्यापादयिष्यति। इति तेनाभिहितः स आह। धिङ्मूर्ख नाहं विद्याया विफलतां करोमि। ततस्तेनाभिहितम्। तर्हि प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि। तथानुष्ठिते यावत्सजीवः कृतस्तावत्ते त्रयोपि सिंहेनोत्थाय व्यापादिताः। स च पुनर्वृक्षादवतीर्य गृहे गतः। अतोहं ब्रवीमि।

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥ ३९ ॥

अतः परमुक्तं च ।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ ४० ॥

चक्रधर आह । कथमेतत् । सोब्रवीत् ।

## कथा ५.

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म । बालभावे तेषां मतिरजायत । भो देशान्तरं गत्वा विद्याया उपार्जनं क्रियते । अथान्यस्मिन्दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कन्यकुब्जे गताः । तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दानि यावदेकचित्ततया विद्याकुशलास्ते सर्वे संजाताः । ततस्तैश्चतुर्भिर्मिलित्वोक्तम् । वयं सर्वविद्यापारे गताः । तदुपाध्यायमुत्कलापयित्वा स्वदेशे गच्छामः । तथैव क्रियतामित्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिताः । यावत्कंचिन्मार्गं यान्ति तावद्द्वौ पन्थानौ समायातौ । उपविष्टाः सर्वे । तत्रैकः प्रोवाच । केन मार्गेण गच्छामः । एतस्मिन्समये तस्मिन्पत्तने कश्चिद्वणिक्पुत्रो मृतः । तस्य दाहार्थे महाजनो गतोभूत् । ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम् । महाजनो येन गतः स पन्था इति तन्महाजनमार्गेण गच्छामः । अथ ते पण्डिता यावन्महाजनमेलापकेन सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः । अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम् ।

आतुरे व्यसने प्राप्ते दुर्भिक्षे शत्रुसंकटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ४१ ॥

तदहो अयमस्मदीयो बान्धवः । ततः कश्चित्तस्य ग्रीवायां लगति । कोपि पादौ प्रक्षालयति । अथ यावद्दिशामवलोकनं ते पण्डिताः कुर्वन्ति तावत्कश्चिदुष्ट्रो दृष्टः । तैश्चोक्तम् । एतत्किम् । तावत्तृतीयेन पुस्तकमुद्घाट्योक्तम् । धर्मस्य त्वरिता गतिः । एष धर्मस्तावत् । चतुर्थे-

नोक्तम् । इष्टं धर्मेण योजयेत् । अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः । केनचिद्रजकस्याग्रे कथितम् । यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातस्तावत्ते प्रनष्टाः । यावदग्रे किंचित्स्तोकं मार्गं यान्ति तावत्काचिन्नद्यासादिता । तन्नस्या जलमध्ये पलाशपत्त्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम् । आगमि  े यत्पत्त्रं तदस्मांस्तारयिष्यति । एतत्कथयित्वा तत्पत्त्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमानमवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम् ।

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥ ४२ ॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः । अथ तैश्च पश्चाद्गत्वा कश्चिद्ग्राम आसादितः । तेपि ग्रामीणैर्निमन्त्रिताः पृथक्पृथग्गृहेषु नीताः । तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता । ततो विचिन्त्य पण्डितेनोक्तम् । यद्दीर्घसूत्री विनश्यति । एवमुक्त्वा भोजनं परित्यज्य गतः । तथा द्वितीयस्य मण्डका दत्ताः । तेनाप्युक्तम् । अतिविस्तरविस्तीर्णं न तद्भवेच्चिरायुषम् । स च भोजनं त्यक्त्वा गतः । अथ तृतीयस्य वटिकाभोजनं दत्तम् । तत्रापि पण्डितेनोक्तम् । छिद्रेष्वनर्था बहुलीभवन्ति । एवं तेपि त्रयः पण्डिताः क्षुत्क्षामकण्ठा लोकैर्हास्यमानास्ततः स्थानात्स्वदेशं गताः । अथ सुवर्णसिद्धिराह । यत्त्वं लोकव्यवहारमजानन्मया वार्यमाणोपि न स्थितस्तत ईदृशीमवस्थामुपगतः । अतोहं ब्रवीमि ।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ ४३ ॥

तच्छ्रुत्वा चक्रधर आह । अहो अकारणमेतत् । बहुबुद्धयोपि विनश्यन्ति दुष्टदैवेन नाशिताः । स्वल्पबुद्धयोप्येकस्मिन्कुले नन्दन्ति संततम् । उक्तं च ।

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोपि वने विसर्जितः कृतप्रयत्नोपि गृहे न जीवति ॥ ४४ ॥

तथा च ।

शतबुद्धिः कृतोन्नामः सलम्बश्च सहस्रधीः ।
एकबुद्धिरहं भद्रे क्रीडामि विमले जले ॥ ४५ ॥

सुवर्णसिद्धिराह । कथमेतत् । स आह ।

## कथा ६.

कस्मिंश्चिज्जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः । अथ तयोरेकबुद्धिर्नाम मण्डूको मित्रतां गतः । एवं ते त्रयोपि जलतीरे कंचित्कालं वेलायां सुभाषितगोष्ठीसुखमनुभूय भूयोपि सलिलं प्रविशन्ति । अथ कदाचित्तेषां गोष्ठीगतानां जालहस्तधीवराः प्रभूतैर्मत्स्यैर्व्यापादितैर्मस्तके विधृतैरस्तमनवेलायां तस्मिञ्जलाशये समायाताः । ततः सलिलाशयं दृष्ट्वा मिथः प्रोचुः । अहो बहुमत्स्योयं ह्रदो दृश्यते स्वल्पसलिलश्च । तत्प्रभातेत्रागमिष्यामः । एवमुक्त्वा स्वगृहं गताः । मत्स्याश्च विषण्णवदना मिथो मन्त्रं चक्रुः । ततो मण्डूक आह । भोः शतबुद्धे श्रुतं धीवरोक्तं भवद्भ्याम् । तत्किमत्र युज्यते कर्तुं पलायनमवष्टम्भं वा । यत्कर्तुं युक्तं भवति तदादिश्यतामद्य । तच्छ्रुत्वा सहस्रबुद्धिः प्रहस्य प्राह । भोः पुत्र मा भैषीर्यतो वचनस्मरणमात्रादेव भयं न कार्यम् । न भेतव्यम् । उक्तं च

सर्पाणां च खलानां च सर्वेषां दुष्टचेतसाम् ।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ ४६ ॥

तत्तावत्तेषामागमनमपि न संपत्स्यते । भविष्यति वा तर्हि त्वां बुद्धिप्रभावेनात्मसहितं रक्षयिष्यामि यतोनेकां सलिलगतिचर्यामहं जानामि । तदाकर्ण्य शतबुद्धिराह । भो युक्तमुक्तं भवता । सहस्रबुद्धिरेव भवान् । अथवा साध्विदमुच्यते ।

बुद्धेर्बुद्धिमतां लोके नास्त्यगम्यं हि किंचन ।
बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः ॥ ४७ ॥

तथा च ।

> न यत्रास्ति गतिर्वायो रश्मीनां च विवस्वतः ।
> तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥ ४८ ॥

ततो वचनश्रवणमात्रादपि पितृपर्यायागतं जन्मस्थानं त्यक्तुं न शक्यते । उक्तं च ।

> न तत्स्वर्गेपि सौख्यं स्याद्दिव्यस्पर्शनशोभने ।
> कुस्थानेपि भवेत्पुंसां जन्मनो यत्र संभवः ॥ ४९ ॥

तन्न कदाचिदपि गन्तव्यम् । अहं त्वां सुबुद्धिप्रभावेन रक्षयिष्यामि । मण्डूक आह । भद्रौ मम तावदेकैव बुद्धिः पलायनपरा । तदहमन्यं जलाशयमद्यैव सभार्यो यास्यामि । एवमुक्त्वा स मण्डूको रात्रावेवान्यजलाशयं गतः । धीवरैरपि प्रभात आगत्य जघन्यमध्यमोत्तमजलचरा मत्स्यकूर्ममण्डूककर्कटादयो गृहीताः । तावपि शतबुद्धिसहस्रबुद्धी सभार्यौ पलायमानौ चिरमात्मानं गतिविशेषविज्ञानै रक्षन्तौ जाले पतितौ व्यापादितौ च । अथापराह्णसमये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः । गुरुत्वाच्चैकेन शतबुद्धिः स्कन्धे कृतः । सहस्रबुद्धिः प्रलम्बमानो नीयते । ततश्च वापीकण्ठोपगतेन मण्डूकेन तौ तथा नीयमानौ दृष्ट्वाभिहिता स्वपत्नी । प्रिये पश्य पश्य ।

> शतबुद्धिः कृतोन्नामो लम्बते च सहस्रधीः ।
> एकबुद्धिरहं भद्रे क्रीडामि विमले जले ॥ ५० ॥

अतोहं ब्रवीमि । नैकान्ते बुद्धिरपि प्रमाणम् । सुवर्णसिद्धिराह । यद्यप्येतदस्ति तथापि मित्रवचनमनुल्लङ्घनीयम् । परं किं क्रियते । निवारितोपि मया न स्थितोतिलौल्याद्विद्याहंकाराच्च । अथवा साध्विदमुच्यते ।

> साधु मातुल गीतेन मया प्रोक्तोपि न स्थितः ।
> अपूर्वोयं मणिर्बद्धः संप्राप्तं गीतलक्षणम् ॥ ५१ ॥

चक्रधर आह । कथमेतत् । सोब्रवीत् ।

## कथा ७.

कस्मिंश्चिदधिष्ठान उद्धतो नाम गर्दभः प्रतिवसति स्म । स सदैव रजकगृहे कर्म कृत्वा रात्रौ स्वेच्छया पर्यटति । ततः प्रत्यूषे बन्धनभयात्स्वयमेव रजकगृहमायाति । रजकोपि ततस्तं बन्धनेन नियुनक्ति । अथ तस्य रात्रौ पर्यटतः क्षेत्राणि कदाचिच्छृगालेन सह मैत्री संजाता। स च पीवरत्वाद्वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रे शृगालसहितः प्रविशति। एवं तौ स्वेच्छया चिर्भटिकाभक्षणं कृत्वा प्रत्यहं प्रत्यूषे स्वस्थानं व्रजतः । अथ कदाचित्तेन मदोद्धतेन रासभेन क्षेत्रमध्यस्थितेन शृगालोभिहितः । भो भगिनीसुत पश्य पश्य । अतीव निर्मला रजनी । तदहं गीतं करिष्यामि । तत्कथय कतमेन रागेण करोमि । स आह । माम किमनेन वृथार्थप्रचालनेन यतश्चौरकर्मप्रवृत्तावावां निभृतैश्च चौरजारैरत्र स्थातव्यम् । उक्तं च ।

काशी विवर्जयेच्चौर्यं निद्रालुश्च स चौरिकाम् ।
जिह्वालौल्यं रुजाक्रान्तो जीवितं योत्र वाञ्छति ॥ ९२ ॥

अपरं त्वदीयं गीतं न मधुरस्वरम् । शङ्खशब्दानुकारं दूरादपि श्रूयते । तदत्र क्षेत्रे रक्षापुरुषाः सुप्ताः सन्ति । त उत्थाय वधं बन्धं वा करिष्यन्ति । तद्भक्षय तावदमृतमयीश्चिर्भटीः । मा त्वमव्यापारपरो भव । तच्छ्रुत्वा रासभ आह । भो न त्वं वेत्सि गीतरसं वनाश्रयत्वात् । तेनैतद्ब्रवीषि । उक्तं च ।

शरज्ज्योत्स्नाहते दूरं तमसि प्रियसंनिधौ ।
धन्यानां जायते कर्णे गीतझङ्कारजा सुधा ॥ ९३ ॥

शृगाल आह । माम अस्त्येतत्परं न वेत्सि त्वं गीतम् । केवलमुन्नदसि । तत्किं तेन स्वार्थभ्रंशकेन । रासभ आह । धिग्धिङ्मूर्ख किमहं न जानामि गीतम् । तद्यथा तस्य भेदाञ्छृणु ।

सप्त स्वरास्त्रयो ग्रामा मूर्छनाश्चैकविंशतिः ।
तानास्त्वेकोनपञ्चाशदित्येतत्स्वरमण्डलम् ॥ ९४ ॥

स्थानत्रयं यतीनां च षडास्यानि रसा नव ।
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत्ततः स्मृताः ॥ ५५ ॥
पञ्चाशीत्यधिकं ह्येतद्गीताङ्गानां शतं स्मृतम् ।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम् ॥ ५६ ॥
नान्यद्गीतात्प्रियं लोके देवानामपि दृश्यते ।
शुष्कस्नायुस्वराह्लादात्त्र्यक्षं जग्राह रावणः ॥ ५७ ॥

तत्कथं भगिनीसुत मामनभिज्ञं वदन्निवारयसि । शृगाल आह । माम यद्येवं तदहं तावद्वृतेर्द्वारस्थितः क्षेत्रपमवलोकयामि । त्वं पुनः स्वेच्छया गीतं कुरु । तथानुष्ठिते रासभरटनमाकर्ण्य क्षेत्रपः क्रोधाद्दन्तान्घर्षयन्प्रधावितः । यावद्रासभो दृष्टस्तावल्लकुटप्रहारैस्तथा हतो यथा प्रताडितो भूपृष्ठे पतितः । ततश्च सच्छिद्रोलूखले बद्धा गतो भूयोपि प्रसुप्तः । रासभोपि स्वजातिस्वभावाद्गतवेदनः क्षणेनाभ्युत्थितः । उक्तं च ।

सारमेयस्य चाश्वस्य रासभस्य विशेषतः ।
मुहूर्तात्परतो न स्यात्प्रहारजनिता व्यथा ॥ ५८ ॥

ततस्तमेवोलूखलमादाय वृतिं चूर्णयित्वा पलायितुमारब्धः । अत्रान्तरे शृगालोपि दूरादेव तं दृष्ट्वा सस्मितमाह ।

साधु मातुल गीतेन मया प्रोक्तोपि न स्थितः ।
अपूर्वोयं मणिर्बद्धः संप्राप्तं गीतलक्षणम् ॥ ५९ ॥

तद्भवानपि मया वार्यमाणोपि न स्थितः । तच्छ्रुत्वा चक्रधर आह । भो मित्र सत्यमेतत् । अथवा साध्विदमुच्यते ।

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः ।
स एव निधनं याति यथा मन्थरकौलिकः ॥ ६० ॥

सुवर्णसिद्धिराह । कथमेतत् । सोब्रवीत् ।

## कथा ८.

कस्मिंश्चिदधिष्ठाने मन्थरको नाम कौलिकः प्रतिवसति स्म । तस्य

कदाचित्पटकर्माणि कुर्वतः सर्वपटकर्मकाष्ठानि भग्नानि। ततः स कुठारमादाय वने काष्ठार्थं गतः। स च समुद्रतटं यावद्भ्रमन्प्रयातः। ततश्च तत्र शिंशपापादपस्तेन दृष्टः। ततश्चिन्तितवान्। महानयं वृक्षो दृश्यते। तदनेन कर्तितेन प्रभूतानि पटकरणकृत्यानि भविष्यन्ति। इत्यवधार्य तस्योपरि कुठारमुत्क्षिप्तवान्। अथ तत्र वृक्षे कश्चिद्व्यन्तरः समाश्रित आसीत्। अथ तेनाभिहितम्। भोः मदाश्रयोयं पादपः सर्वथा रक्षणीयो यतोहमत्र महासौख्येन तिष्ठामि समुद्रकल्लोलस्पर्शनाच्छीतवायुनाप्यायितः। कौलिक आह। भोः किमहं करोमि दारुसामग्रीं विना मे कुटुम्बं बुभुक्षया पीड्यते। तस्मादन्यत्र शीघ्रं गम्यताम्। अहमेनं कर्तयिष्यामि। व्यन्तर आह। भोस्तुष्टस्तवाहम्। तत्प्रार्थ्यतामभीष्टं किंचित्। रक्षैनं पादपमिति। कौलिक आह। यद्येवं तदहं स्वगृहं गत्वा स्वमित्रं स्वभार्यां च पृष्ट्वागमिष्यामि। ततस्त्वया देयम्। अथ तथेति प्रतिज्ञाते व्यन्तरेण स कौलिकः प्रहृष्टः स्वगृहं प्रति निवृत्तः। यावदग्रे गच्छति तावद्ग्रामप्रवेशे निजसुहृदं नापितमपश्यत्। ततस्तस्य व्यन्तरवाक्यं निवेदयामास। यदहो मित्र मम कश्चिद्व्यन्तरः सिद्धः। तत्कथय किं प्रार्थयामि। अहं त्वां प्रष्टुमागतः। नापित आह। भद्र यद्येवं तद्राज्यं प्रार्थय येन त्वं राजा भवस्यहं त्वन्मन्त्री। द्वावपीह सुखमनुभूय परलोकसुखमनुभवावः। उक्तं च।

राजा व्ययपरो नित्यमिह कीर्तिमवाप्य च।
तत्प्रभावात्पुनः स्वर्गे स्पर्धते त्रिदशैः सह॥ ६१॥

कौलिक आह। अस्त्येतत्परं तथापि गृहिणीं पृच्छामि। स आह। भद्र शास्त्रविरुद्धमेतद्यत्स्त्रिया सह मन्त्रो यतस्ताः स्वल्पमतयो भवन्ति। उक्तं च।

भोजनाच्छादने दद्यादृतुकाले च संगमम्।
भूषणाद्यं च नारीणां न ताभिर्मन्त्रयेत्सुधीः॥ ६२॥

यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता।
राजन्निर्मूलतां याति तद्वृहं भार्गवोऽब्रवीत्॥ ६३॥

तावत्स्यात्सुप्रसन्नास्यस्तावद्गुरुजने रतः ।
पुरुषो योषितां यावन्न शृणोति वचो रहः ॥ ६४ ॥
एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः ।
न तासां वल्लभः कोपि सुतोपि स्वसुखं विना ॥ ६५ ॥

कौलिक आह । तथापि प्रष्टव्या सा मया यतः पतिव्रता सा । अपरं तामपृष्ट्वाहं न किंचित्करोमि । एवं तमभिधाय सत्वरं गत्वा तामुवाच । प्रिये अद्यास्माकं कश्चिद्व्यन्तरः सिद्धः । स वाञ्छितं प्रयच्छति । तदहं त्वां प्रष्टुमागतः । तत्कथय किं प्रार्थयामि । एष तावन्मम मित्रो नापितो वदत्येवं यद्राज्यं प्रार्थय । साह । आर्यपुत्र का मतिर्नापितानाम् । तन्न कार्यं तद्वचः । उक्तं च ।

चारणैर्वन्दिभिर्नीचैर्नापितैर्बालकैरपि ।
न मन्त्रं मतिमान्कुर्यात्सार्धं भिक्षुभिरेव च ॥ ६६ ॥

अपरं महती क्लेशपरंपरैषा राज्यस्थितिः संधिविग्रहयानासनसंश्रयद्वैधीभावादिभिः कदाचित्पुरुषस्य सुखं न प्रयच्छतीति । यतः ।

यदैव राज्ये क्रियतेभिलाषस्तदैव याति व्यसनेषु बुद्धिः ॥
घटा नृपाणामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥६७॥

तथा च ।

रामप्रव्रजनं वने निवसनं पाण्डोः सुतानां वने
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
सौदासं तदवस्थमर्जुनवधं संचिन्त्य लङ्केश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तद्वाञ्छयेत् ॥ ६८ ॥
यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः ।
वधं राज्यकृते राज्ञां तद्राज्यं दूरतस्त्यजेत् ॥ ६९ ॥

कौलिक आह । सत्यमुक्तं भवत्या । तत्कथय किं प्रार्थयामि । साह । त्वं तावदेकं पटं नित्यमेव निष्पादयसि । तेन सर्वा व्ययशुद्धिः संपद्यते । इदानीं त्वमात्मनोन्यद्बाहुयुगलं द्वितीयं शिरश्च प्रार्थय येन

पटद्वयं संपादयसि पुरतः पृष्ठतश्च । एकस्य मूल्येन गृहे यथापूर्वं व्ययः शुध्यति द्वितीयस्य मूल्येन विशेषकृत्यानि क्रियन्ते । एवं सौख्येन स्वजातिमध्ये श्लाघ्यमानस्य कालो यास्यति । लोकद्वयस्योपार्जना भविष्यति । सोपि तदाकर्ण्य प्रहृष्टः प्राह । साधु पतिव्रते साधु । युक्तमुक्तं भवत्या । तदेवं करिष्यामि । एष मे निश्चयः । ततोसौ गत्वा व्यन्तरं प्रार्थयामास । भो यदि मयेप्सितं प्रयच्छसि तद्देहि मे द्वितीयं बाहुयुगलं शिरश्च । एवमभिहिते तत्क्षणादेव द्विशिराश्चतुर्बाहुश्च संजातः । ततो हृष्टमना यावद्गृहमागच्छति तावल्लोकै राक्षसोयमिति मन्यमानैर्लकुटपाषाणप्रहारैस्ताडितो मृतश्च । अतोहं ब्रवीमि ।

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः ।
स एव निधनं याति यथा मन्थरकौलिकः ॥ ७० ॥

चक्रधर आह । भोः सत्यमेतत् । सर्वोपि जनोश्रद्धेयामाशापिशाचिकां प्राप्य हास्यपदवीं याति । अथवा साध्विदमुच्यते केनापि ।

अनागतवतीं चिन्तामसंभाव्यां करोति यः ।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥ ७१ ॥

सुवर्णसिद्धिराह । कथमेतत् । सोब्रवीत् ।

## कथा ९.

कस्मिंश्चिन्नगरे कश्चित्स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म । तस्य भिक्षार्जितैः सक्तुभिर्भुक्तोर्वरितैर्घटः परिपूरितः । तं च घटं नागदन्तेवलम्ब्य तस्याधस्तात्खट्वां निधाय सततमेकदृष्ट्या तमवलोकयति । अथ कदाचिद्रात्रौ सुप्तश्चिन्तयामास यत्परिपूर्णोयं घटस्तावत्सक्तुभिर्वर्तते । तद्यदि दुर्भिक्षं भवति तदनेन रूपकाणां शतमुत्पद्यते ततस्तेन मयाजाद्वयं ग्रहीतव्यम् । ततः षण्मासिकप्रसववशात्ताभ्यां यूथं भविष्यति । ततोजाभिः प्रभूता गा ग्रहीष्यामि गोभिर्महिषीर्महिषीभिर्वडवाः । वडवाप्रसवतः प्रभूता अश्वा भविष्यन्ति । तेषां विक्रयात्प्रभूतं सुवर्णं भविष्यति । सुवर्णेन चतुःशालं गृहं संपद्यते । ततः कश्चिद्ब्राह्मणो

मम गृहमागत्य प्राप्तवरां रूपाढ्यां कन्यां दास्यति । तत्सकाशात्पुत्रो मे भविष्यति । तस्याहं सोमशर्मेति नाम करिष्यामि । ततस्तस्मिञ्जानुचलनयोग्ये संजातेहं पुस्तकं गृहीत्वाश्वशालायाः पृष्ठदेश उपविष्टस्तदवधारयिष्यामि । अत्रान्तरे सोमशर्मा मां दृष्ट्वा जनन्युत्सङ्गाज्जानुप्रचलनपरोश्वखुरासन्नवर्ती मत्समीपमागमिष्यति । ततोहं ब्राह्मणीं कोपाविष्टोभिधास्यामि । गृहाण तावद्बालकम् । सापि गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति । ततोहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि । एवं तेन ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः । सक्तुभिः पाण्डुरतां गतः । अतोहं ब्रवीमि ।

अनागतवतीं चिन्तामसंभाव्यां करोति यः ।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥ ७२ ॥

सुवर्णसिद्धिराह । एवमेतत् । कस्ते दोषो यतः सर्वोपि लोभेन विडम्बितो बाध्यते । उक्तं च ।

यो लौल्यात्कुरुते कर्म नैवोदर्कमवेक्षते ।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥ ७३ ॥

चक्रधर आह । कथमेतत् । स आह ।

## कथा १०.

अस्ति कस्मिंश्चिन्नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म । तस्य पुत्रा वानरक्रीडारता वानरयूथं नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म । अथ वानरयूथाधिपो यः स औशनसबार्हस्पत्यचाणक्यमतवित्तदनुष्ठाता च तान्सर्वानप्यध्यापयति स्म । अथ तस्मिन्राजगृहे लघुकुमारवाहनयोग्यं मेषयूथमस्ति । तन्मध्यादेको जिह्वालौल्यादहर्निशं निःशङ्कं महानसे प्रविश्य यत्पश्यति तत्सर्वं भक्षयति । ते च सूपकारा यत्किंचित्काष्ठं मृन्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति तेनाशु ताडयन्ति । सोपि वानरयूथपस्तद्दृष्ट्वा व्यचिन्तयत् । अहो मेषसूपकारकलहोयं वानराणां क्षयाय भविष्यति यतो-

न्नस्वादलम्पटोयं मेषो महाकोपाश्च सूपकारा यथासन्नवस्तुना प्रहरन्ति । तद्यदि वस्तुनोभावात्कदाचिदुल्मुकेन ताडयिष्यन्ति तदूर्णाप्रचुरोयं मेषः स्वल्पेनापि वह्निना प्रज्वलिष्यति । तद्दह्यमानः पुनरश्वकुट्यां समीपवर्तिन्यां प्रवेक्ष्यति । सापि तृणप्राचुर्याज्ज्वलिष्यति । ततोश्वा वह्निदाघमवाप्स्यन्ति । शालिहोत्रेण पुनरेतदुक्तम् । यद्वानरवसयाश्वानां वह्निदाघदोषः प्रशाम्यति । तन्नूनमेतेन भाव्यमत्र निश्चयः । एवं निश्चित्य सर्वान्वानरानाहूय रहसि प्रोवाच । यत्

मेषेण सूपकाराणां कलहो यत्र जायते ।
स भविष्यत्यसंदिग्धं वानराणां क्षयावहः ॥ ७४ ॥

तस्मात्स्यात्कलहो यत्र गृहे नित्यं विकारणः ॥
तद्गृहं जीवितं वाञ्छन्दूरतः परिवर्जयेत् ॥ ७५ ॥

तथा च ।

कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम् ।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ७६ ॥

तन्न यावत्सर्वेषां संक्षयो भवति तावदेतद्राजगृहं संत्यज्य वनं गच्छामः । अथ तत्तस्य वचनमश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः । भो भवतो वृद्धभावाद्बुद्धिवैकल्यं संजातं येनैतद्ब्रवीषि । उक्तं च ।

वदनं दशनैर्हीनं लाला स्रवति नित्यशः ।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः ॥ ७७ ॥

न वयं स्वर्गसमानोपभोगान्नानाविधान्भक्ष्यविशेषान्राजपुत्रैः स्वहस्तदत्तानमृतकल्पान्परित्यज्य तत्राटव्यां कषायकटुतिक्तक्षाररूक्षफलानि भक्षयिष्यामः । तच्छ्रुत्वाश्रुकलुषां दृष्टिं कृत्वा स प्रोवाच । रे रे मूर्खा यूयमेतस्य सुखस्य परिणामं न जानीथ । पाकरसास्वादनप्रायमेतत्सुखं परिणामे विषवद्भविष्यति । तदहं कुलक्षयं स्वयं नावलोकयिष्यामि । सांप्रतं वनं यास्यामि । उक्तं च ।

मित्रं व्यसनसंप्राप्तं स्वस्थानं परपीडितम् ।
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ७८ ॥

एवमभिधाय सर्वांस्तान्परित्यज्य स यूथाधिपोऽटव्यां गतः । अथ तस्मिन्गतेऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टो यावत्सूपकारेण नान्यत्किंचित्समासादितं तावदर्धज्वलितकाष्ठेन ताड्यमानो जाज्वल्यमानशरीरः शब्दायमानोऽश्वकुट्यां प्रत्यासन्नवर्तिन्यां प्रविष्टः । तत्र तृणप्राचुर्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि वह्निज्वालास्तथा समुत्थिता यथा केचिदश्वाः स्फुटितलोचनाः पञ्चत्वं गताः केचिद्बन्धनानि त्रोटयित्वार्धदग्धशरीरा इतश्चेतश्च हेषायमाणा धावमानाः सर्वमपि जनसमूहमाकुलीचक्रुः । अत्रान्तरे राजा सविषादः शालिहोत्रज्ञान्वैद्यानाहूय प्रोवाच । भोः प्रोच्यतामेषामश्वानां कश्चिद्दाहोपशमनोपायः । तेऽपि शास्त्राणि संचिन्त्य प्रोचुः । देव प्रोक्तमत्र विषये भगवता शालिहोत्रेण यत् ।

कपीनां मेदसा दोषो वह्निदाहसमुद्भवः ।
अश्वानां नाशमभ्येति तमः सूर्योदये यथा ॥ ७९ ॥

तत्क्रियतामेतच्चिकित्सितं द्राग्यावन्नैतेन दाहदोषेण विनश्यन्ति । सोऽपि तदाकर्ण्य समस्तवानरवधमादिष्टवान् । किं बहुना । सर्वेऽपि ते वानरा विविधायुधलकुटपाषाणादिभिर्व्यापादिता इति । अथ सोऽपि वानरयूथपस्तं पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं ज्ञात्वा परं विषादमुपागतः । स त्यक्ताहारक्रियो वनाद्वनं पर्यटति । अचिन्तयच्च । कथमहं तस्य नृपापसदस्यानृणताकृत्येनापकृत्यं करिष्यामि । उक्तं च ।

मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम् ।
भयाद्वा यदि वा कामात्स ज्ञेयः पुरुषाधमः ॥ ८० ॥

अथ तेन वृद्धवानरेण कुत्रचित्पिपासाकुलेन भ्रमता पद्मिनीषण्डमण्डितं सरः समासादितम् । तद्यावत्सूक्ष्मेक्षिकयावलोकयति तावद्वनचरमनुष्याणां पदपङ्क्तिप्रवेशोऽस्ति न निष्क्रमणम् । ततश्चिन्तितम् । नूनमत्र जलान्ते दुष्टग्राहेण भाव्यम् । तत्पद्मिनीनालमादाय दूरस्थोऽपि जलं पिबामि । तथानुष्ठिते तन्मध्याद्राक्षसो निष्क्रम्य रत्नमालाविभू-

षितकण्ठस्तमुवाच । भो अत्र यः सलिले प्रवेशं करोति स मे भक्ष्य इति । तन्नास्ति धूर्ततरस्त्वत्समोन्यो यत्पानीयमनेन विधिना पिबसि । ततस्तुष्टोहम् । प्रार्थय हृदयवाञ्छितम् । कपिराह । भोः कियती ते भक्षणशक्तिः । स आह । शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि भक्षयामि । बाह्यतः शृगालोपि मां दूषयति । वानर आह । अस्ति मे भूपतिना सहात्यन्तं वैरम् । यद्येनां रत्नमालां मे प्रयच्छसि तत्सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि यथा प्रविशति तथा करोमि । सोपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह । भो मित्र यत्समुचितं भवति तत्कर्तव्यमिति । वानरोपि रत्नमालाविभूषितकण्ठो वृक्षप्रासादेषु परिभ्रमञ्जनैर्दृष्टः पृष्टश्च । भो यूथप भवानियन्तं कालं कुत्र स्थितः । भवतेदृग्रत्नमाला कुत्र लब्धा या दीप्त्या सूर्यमपि निरस्करोति । वानरः प्राह । अस्ति कुत्रचिदरण्ये गुप्ततरं महत्सरो धनदनिर्मितम् । तत्र सूर्येर्धोदिते रविवारे यः कश्चिन्निमज्जति स धनदप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निःसरति । अथ भूभुजा तदाकर्ण्य स वानरः समाहूतः पृष्टश्च । भो यूथाधिप किं सत्यमेतत् । रत्नमालासनाथं सरोस्ति क्वापि । कपिराह । स्वामिन् एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया प्रत्ययस्ते । तद्यदि रत्नमालाप्रयोजनं तन्मया सह कमपि प्रेषय येन दर्शयामि । तच्छ्रुत्वा नृपतिराह । यद्येवं तदहं सपरिजनः स्वयमेष्यामि येन प्रभूता रत्नमालाः संपद्यन्ते । वानर आह । स्वामिन् एवं क्रियताम् । तथानुष्ठिते भूपतिना सह रत्नमालालोभेन सर्वे कलत्रभृत्याः प्रस्थिताः । वानरोपि राज्ञा दोलाधिरूढेन स्वोत्सङ्ग आरोपितः सुखेन प्रीतिपूर्वमानीयते । अथवा साध्विदमुच्यते ।

तृष्णे देवि नमस्तुभ्यं यया वित्तान्विता अपि ।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥ ८१ ॥

तथा च ।

इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ ८२ ॥

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीर्यतश्चक्षुषी श्रोत्रे तृष्णैका तरुणायते ॥ ८३ ॥

अथ तत्सरः समासाद्य वानरः प्रत्यूषसमये राजानमुवाच । देव अत्रार्धोदिते सूर्येत्र प्रविष्टानां सिद्धिर्भवति । तत्सर्वोपि जन एकदैव प्रविशतु । त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्वदृष्टस्थानमासाद्य प्रभूतास्ते रत्नमाला दर्शयामि । अथ प्रविष्टास्ते लोकाःसर्वे भक्षिता राक्षसेन । अथ तेषु चिरायमाणेषु राजा वानरमाह । भो यूथाधिप किमिति चिरायते मे जनः । तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच । भो दुष्टनरपते राक्षसेनान्तः सलिलस्य स्थितेन भक्षितस्ते परिजनः । साधितं मया कुलक्षयजं वैरम् । तद्गम्यताम् । त्वं स्वामीति मत्वा नात्र प्रवेशितः । उक्तं च ।

कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ८४ ॥

तत्त्वया मम कुलक्षयः कृतो मया पुनस्तवेति । अथैतदाकर्ण्य राजा शोकाविष्टः पदातिरेकाकी यथायातमार्गेण निष्क्रान्तः । अथ तस्मिन्भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह ।

हतः शत्रुः कृतं मित्रं रत्नमाला न हारिता ।
नालेनास्वादितं तोयं साधु भो बटवानर ॥ ८५ ॥

अतोहं ब्रवीमि ।

यो लौल्यात्कुरुते कर्म नैवोदर्कमवेक्षते ।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥ ८६ ॥

एवमुक्त्वा भूयोपि स चक्रधरमाह । भो मित्र प्रेषय मां येन स्वगृहं गच्छामि । चक्रधर आह । भद्र आपदर्थे धनमित्रसंग्रहः क्रियते । तन्मामेवंविधं त्यक्त्वा क्व यास्यसि । उक्तं च ।

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत् ।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम् ॥ ८७ ॥

सुवर्णसिद्धिराह । भोः सत्यमेतद्यदि गम्यस्थाने शक्तिर्भवति । एतत्पुनर्मनुष्याणामगम्यस्थानम् । नास्ति कस्यापि त्वामुन्मोचयितुं शक्तिः । अपरं यथा यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि तथा तथाहमेतज्जानामि यद्द्राग्गच्छामि मा कश्चिन्ममाप्यनर्थो भवेत् । यतः ।

यादृशी वदनच्छाया दृश्यते तव वानर ।
विकालेन गृहीतोसि यः परैति स जीवति ॥ ८८ ॥

चक्रधर आह । कथमेतत् । सोब्रवीत् ।

## कथा ११.

कस्मिंश्चिन्नगरे भद्रसेनो नाम राजा प्रतिवसति स्म । तस्य सर्वलक्षणसंपन्ना रत्नवती नाम कन्यास्ति । तां कश्चिद्राक्षसो जिहीर्षति । रात्रावागत्योपभुङ्क्ते । परं कृतरक्षोपधानां हर्तुं न शक्नोति । सापि तत्समये रक्षःसांनिध्यजामवस्थामनुभवति कम्पादिभिः । एवमतिक्रामति काले कदाचित्स राक्षसो मध्यनिशायां गृहकोणे स्थितः । सापि राजकन्या स्वसखीमुवाच । सखि पश्यैष विकालसमये नित्यमेव मां कदर्थयति । अस्ति तत्तस्य दुरात्मनः प्रतिषेधोपायः कश्चित् । तच्छ्रुत्वा राक्षसोपि व्यचिन्तयत् । नूनं यथाहं तथान्योपि कश्चिद्विकालनामास्या हरणाय नित्यमेवागच्छति । परं सोप्येनां हर्तुं न शक्नोति । तत्तावदश्वरूपं कृत्वाश्वमध्यगतो निरीक्षयामि किंरूपः स किंप्रभाव इति । एवं राक्षसोश्वरूपं कृत्वाश्वानां मध्ये तिष्ठति । तथानुष्ठिते निशीथसमये राजगृहे कश्चिदश्वचौरः प्रविष्टः । स च सर्वानश्वानवलोक्य तं राक्षसमश्वतमं विज्ञायाधिरूढः । अत्रान्तरे राक्षसश्चिन्तयामास । नूनमेष विकालनामा मां चौरं मत्वा कोपान्निहन्तुमागतः । तत्किं करोमि । एवं चिन्तयन्सोपि तेन खलीनां मुखे निधाय कशाघातेन ताडितः । अथासौ भयत्रस्तमनाः प्रधावितुमारब्धः । चौरोपि दूरं गत्वा खलीनाकर्षणेन तं स्थिरं कर्तुमारब्धवान् । स तु केवलं वेगाद्वेगतरं

गच्छति । अथ तं तथागणितखलीनाकर्षणं मत्वा चौरश्चिन्तयामास । अहो नैवंविधा वाजिनो भवन्ति नैवमगणितखलीनाः । तन्नूनमनेनाश्वरूपेण राक्षसेन भवितव्यम् । तद्यदि कंचित्पांसुलं भूमिदेशमवलोकयामि तदात्मानं तत्र पातयामि । नान्यथा मे जीवितव्यमस्ति । एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोश्वो वटवृक्षस्य तले निष्क्रान्तः । चौरोपि वटप्ररोहमासाद्य तत्रैव विलग्नः । ततो द्वावपि तौ पृथग्भूतौ परमानन्दभाजौ जीवितविषये लब्धप्रत्याशौ संपन्नौ । अथ तत्र वटे कश्चिद्राक्षससुहृद्वानरः स्थित आसीत् । तेन राक्षसं त्रस्तमालोक्य व्याहृतम् । भो मित्र किमेवं पलाय्यतेलीकभयेन । त्वद्भक्ष्योयं मानुषः । भक्ष्यताम् । सोपि वानरवचो निशम्य स्वरूपमाधाय शङ्कितमनाः स्खलितगतिर्निवृत्तः । चौरोपि तं वानराहूतं ज्ञात्वा कोपात्तस्य लाङ्गूलं लम्बमानं मुखे निधाय चर्वितवान् । वानरोपि तं राक्षसाभ्यधिकं मन्यमानो भयान्न किंचिदुक्तवान्केवलं व्यथार्त्तो निमीलितनयनस्तिष्ठति यथा भवानिति । राक्षसोपि तं तथाभूतमवलोक्य श्लोकमेकमेनमपठत् ।

यादृशी वदनच्छाया दृश्यते तव वानर ।
विकालेन गृहीतोसि यः परैति स जीवति ॥ ८९ ॥

प्रनष्टश्च ।

तत्प्रेषय मां येन गृहं गच्छामि । त्वं पुनरनुभुङ्क्ष्वात्र स्थित एव लोभवृक्षफलम् । चक्रधरः प्राह । भो अकारणमेतत् । दैववशात्संपद्यते नृणां शुभाशुभम् । उक्तं च ।

दुर्गं त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदाच्च वित्तम् ।
शास्त्रं च यस्योशनसा प्रणीतं स रावणो दैववशाद्विपन्नः ॥९०॥

तथा च ।

अन्धकः कुब्जकश्चैव त्रिस्तनी राजकन्यका ।
त्रयोप्यन्यायतः सिद्धाः संमुखे कर्माणि स्थिते ॥ ९१ ॥

सुवर्णसिद्धिराह कथमेतत् । सोब्रवीत् ।

